श्रीगणेशायनमः ॥ अथप्रयोगांतराणि
कात्यायनीतंत्रोक्तानि ॥ प्रतिश्लोकमा
द्यंतयोःप्रणवंजपेन्मंत्रसिद्धिः ॥ १ ॥ अ
ग्रेसर्वत्रश्लोकपदंमंत्रोपलक्षणं॥ सप्रण
वमनुलोमव्यात्हृतित्रयमादौ अंतेतुवि
लोमं तदित्येवं प्रतिश्लोकंकृत्वा शतावृ

त्तपाठेऽतिशीघ्रंसिद्धिः ॥ २ ॥ प्रतिश्लो
कमादौ जातवेदसइत्यृचंपठेत्सर्वकाम
सिद्धिः ॥३॥ अपमृत्युवारणायत्र्यंबक
मंत्रंपठेत् ॥ आदावंतेचशतमित्यर्थः ॥
प्रतिश्लोकंतन्मंत्रजपइत्यन्यत्र ॥ ४ ॥
प्रतिश्लोकं शूलेनपाहिनोदेवीतिपाठाद

पमृत्युनाशः ॥ अस्यकेवलस्यापिश्लो
कस्यलक्षमयुतंसहस्रंशतंवाजपे अपमृ
त्युवारणम् ॥ ५ ॥ प्रतिश्लोकंशरणागत
दीनार्तेतिश्लोकंपठेत्सर्वकार्यसिद्धिः ॥
॥ ६ ॥ प्रतिश्लोकंकरोतुसानःशुभेत्यर्द्धं
पठेत्सर्वकार्य्यसिद्धिः ॥ ७ ॥ स्वाभीष्टव

रप्राप्तयेएवंदेव्यावरंलब्ध्वेति श्लोकंपठे
त् ॥ ८ ॥ सर्वापत्तिवारणायप्रतिश्लोकं
दुर्गेस्मृतेतिपठेत् ॥ अस्यकेवलस्यापि
श्लोकस्यकार्यानुसारेणलक्षमयुतं सह
स्रंशतंवाजपः ॥ ९ ॥ सर्वाबाधेत्यस्यल
क्षजपेप्रतिश्लोकपाठेवाश्लोकोक्तंफल

म् ॥ १० ॥ इत्थंयदायदाबाधेतिश्लोक
जपेमहामारीशांतिः ॥ ११ ॥ ततोवव्रेनृ
पोराज्यमितिमंत्रस्यजपे पुनःस्वराज्य
लाभः ॥१२॥ हिनास्तिदैत्यतेजांसिइत्य
नेनसदीपबलिदाने घंटाबंधनेचबालग्र
हशांतिः ॥१३ ॥ आद्यावृत्तिमनुलोमेन

पठित्वाततोविपरीतक्रमेण द्वितीयामनु
लोमेन तृतीयामित्येवमावृत्तित्रयेणशी
घ्रकार्यसिद्धिः ॥१४॥ सर्वापत्तिवारणा
यदुर्गेस्मृतेत्यर्द्धंततोयदंतियच्चदूरकेइत्यृ
चं तदंते दारिद्र्यदुःखेत्यर्द्धमेवंकार्यानु
सारेणलक्षमयुतंसहस्रंशतंवाजपः॥१५

कांसोस्मीत्यृचंप्रतिश्लोकंपठेल्लक्ष्मीप्रा
प्तिः ॥ १६ ॥ प्रतिश्लोकमनृणाअस्मि
न्नित्यृचंपठेदृणपरिहारः॥१७॥मारणार्थ
मेवमुत्त्कासमुत्पत्त्येतिश्लोकं प्रतिश्लो
कंपठेन्मारणोक्तावृत्तिभिःफलसिद्धिः॥
॥ १८ ॥ ज्ञानिनामपिचेतांसिइतिश्लो

कजपमात्रेणसद्योमोहनमित्यनुभवसि
द्धम् ॥ प्रतिश्लोकंतच्छ्लोकपाठत्ववश्य
म् ॥ १९ ॥ रोगानशेषानितिश्लोकस्य
प्रतिश्लोकंपाठेसकलरोगनाशः ॥ तन्मा
त्रजपेऽपिसः ॥ २० ॥ इत्युक्तासातदादे
वीगंभीरेतिश्लोकस्यप्रतिश्लोकंपाठेपृ

थग्जपेवाविद्याप्राप्तिर्वाग्वैकृतनाशश्च ॥
॥ २१ ॥ भगवत्याकृतंसर्वमित्यादिद्वाद
शोत्तरशताक्षरोमंत्रःसर्वकामदः सर्वाप
त्तिवारणश्च ॥ २२ ॥ देविप्रपन्नार्तिहरेइ
तिश्लोकस्ययथाकार्यं लक्षायुतसहस्र
शतान्यतमसंख्यजपे प्रतिश्लोकंपाठे

वासर्वापन्निवृत्तिःसर्वकामाप्तिश्च ॥ एषु
प्रयोगेषु प्रतिश्लोकंदीपाग्रेकेवलमेवन
मस्करणेऽतिशीघ्रंसिद्धिः ॥ प्रतिश्लोकं
कामबीजसंपुटितस्य एकचत्वारिंशद्दि
नं त्रिरावृत्तौसर्वकामासिद्धिः ॥२३॥ ए
कविंशतिदिनपर्यंतमुक्तरीत्या प्रत्यहंद्वा

दशावृत्तौवशीकरणम् ॥ २४ ॥ मायाबी
जसंपुटितस्यफट्पल्लवसहितस्यसप्तदि
नपर्यंतंत्रयोदशावृत्तावुच्चाटनसिद्धिः ॥
॥ २५ ॥ तादृश्यामेवदिनचतुष्टयमेकाद
शावृत्तौसर्वोपद्रवनाशः ॥ २६ ॥ एकोन
पंचाशद्दिनपर्यंतंप्रतिश्लोकं श्रीबीजसं

पुटितस्यपंचदशावृत्तौ लक्ष्मीप्राप्तिः ॥
॥ २७ ॥प्रतिश्लोकंवाग्बीजसंपुटितस्य
शतावृत्त्याविद्याप्राप्तिः ॥ २८ ॥अथशत
चंडीविधिः ॥ शङ्करस्यभवान्यावाप्रा
सादनिकटेशुभम् ॥ मंडपंद्वारवेद्याढ्यंकु
र्यात्सध्वजतोरणम् ॥ १॥ तत्रकुंडंप्रकु

वींतप्रतीच्यांमध्यतोपिवा ॥ स्नात्वानि
त्यक्रियांकृत्वावृणुयाद्दशवाडवान् ॥ २ ॥
जितेंद्रियान्सदाचारान् कुलीनान्सत्य
वादिनः ॥ वाडवाब्राह्मणाः ॥ व्युत्पनांश्च
ण्डिकापाठरतान्लज्जादयावतः ॥ ३ ॥
मधुपर्कविधानेनस्वर्णवस्त्रादिदानतः ॥

जपार्थमासनंमालां दद्यात्तेभ्योऽपिभो
जनम् ॥४॥ तेहविष्यान्नमश्नंतोमंत्रार्थ
गतमानसाः ॥ भूमौशयानाःप्रत्येकंज
पेयुश्चंडिकास्तवम् ॥ ५ ॥ मार्कंडेयपुरा
णोक्तंदशकृत्वःसचेतसः ॥ नवार्णंचंडि
कामंत्रंजपेयुश्चायुतंपृथक् ॥६॥ पृथक्

संपुटीकरणादितिशेषः ॥ प्रत्येकंब्राह्मणै
रयुतजपःकार्यः ॥ अष्टमीनवमीचतुर्द
शीपौर्णमासीषु यथा शतावृत्तिसमाप्ति
र्भवति तथारंभःकर्तव्यइतिसांप्रदायि
काः ॥ यजमानःपूजयेच्चकन्यानांनव
कंशुभम् ॥ द्विवर्षाद्याद्दशाब्दांताःकुमा

री:परिपूजयेत् ॥१॥ तासांक्रमेणनामा
नि ॥ कुमारी १ त्रिमूर्तिः २ कल्याणी ३
रोहिणी ४ कालिका ५ शांभवी ६ दुर्गा
७ चंडिका ८ सुभद्रा ९ इतिनाममंत्रैस्ता
सांपूजा ॥ तत्रहीनाधिकांगीकुष्ठव्रणयु
ता अंधाकाणाकुरूपाकेकराकुबरीलो

मयुग्देहादासीजा रोगिणीत्येवमाद्याव

र्ज्याः ॥ विप्रांसर्वेष्टसंसिद्ध्यैयशसेक्षत्रि

योद्भवां ॥ वैश्यजांधनलाभायपुत्रास्त्यै

शूद्रजांयजेत् ॥ गंधपुष्पधूपदीपभक्ष्य

भोज्यैर्यथाशक्तिवस्त्राभरणैश्चपूजयेत्

॥ द्विवर्षासाकुमार्युक्तात्रिमूर्तिर्हायनात्रि

प्र. १

का ॥ चतुरब्दातुकल्याणीपंचवर्षातुरोहिणी॥ १ ॥षडब्दाकालिकाप्रोक्ताचंडिकासप्तहायना ॥ अष्टवर्षाशांभवीस्याद्दुर्गातुनवहायना ॥ सुभद्रादशवर्षोक्तानाममंत्रैःप्रपूजयेत् ॥ तासामावाहनेमंत्रः प्रोच्यतेशंकरोदितः ॥ मंत्राक्षरमयींल

वि. १

क्ष्मींमातॄणांरूपधारिणीम्॥ नवदुर्गात्मि
कांसाक्षात्कन्यामावाहयाम्यहम् ॥ कु
मारिकादिकन्यानाम्पूजामंत्रान्ब्रुवेऽधु
ना ॥ जगत्पूज्येजगद्वंद्येसर्वशक्तिस्वरू
पिणि ॥ पूजांगृहाणकौमारिजगन्मात
र्नमोस्तुते ॥ त्रिपुरांत्रिपुराधारांत्रिवर्षां

ज्ञानरूपिणीम्॥ त्रैलोक्यवंदितांदेवींत्रि
मूर्तिंपूजयाम्यहम् ॥ कलात्मिकांकला
तीतांकारुण्यहृदयांशिवाम् ॥ कल्याण
जननींदेवींकल्याणींपूजयाम्यम् ॥ अ
णिमादिगुणाधारामकाराद्यक्षरात्मिका
म् ॥ अनंतशक्तिकांलक्ष्मींरोहिणींपूज

याम्यहम् ॥ कामचारींशुभांकांतांकाल
चक्रस्वरूपिणीम् ॥ कामदांकरुणोदारां
कालिकांपूजयाम्यहम् ॥ चंडवीरांचंड
मायांचंडमुंडप्रभंजनीम् ॥ पूजयामिस
दादेवींचंडिकांचंडविक्रमां ॥ सदानंदक
रींशांतांसर्वदेवनमस्कृताम् ॥ सर्वभूता

त्मिकांलक्ष्मींशांभवींपूजयाम्यहम् ॥ दु
र्गमेदुस्तरेकार्येभवदुःखविनाशिनीं ॥ पू
जयामिसदाभक्त्यादुर्गांदुर्गार्तिनाशिनी
म् ॥ सुंदरींस्वर्णवर्णाभांसुखसौभाग्यदा
यिनीम् ॥ सुभद्रजननींदेवींसुभद्रांपूज
याम्यहम् ॥ एतैर्मंत्रैःपुराणोक्तैस्तांतांक

न्यांसमर्चयेत् ॥ ॥ इतिपूजनंकुमारिका
णाम्॥ ॥ वेद्यांविरचितेरम्येसर्वतोभद्रमं
डले ॥ घटंसंस्थाप्यविधिनातत्रावाह्या
र्चयेच्छिवाम्॥तदग्रेकन्यकाश्चापिपूज
येद्ब्राह्मणानपि ॥ उपचारैस्तुविविधैर्न
र्वाणविरणान्यपि ॥ॐकारःप्रथमंपीठंपू

र्णपीठमतःपरम् ॥ तृतीयंकामपीठंचपू
जयेत्संप्रदायतः ॥पूर्वादिदिक्षुपीठस्यग
णेशादिचतुष्टयम् ॥ गणेशक्षेत्रपालौच
पादुकेबटुकास्त्रयः ॥ आग्नेय्यादिचतुर्दि
क्षुपूज्यंदेवीजतुष्टयम्॥ जयाचविजया
चैवजयंतीचापराजिता ॥ पूर्वोक्तयंत्रेपू

र्वकोणेसरस्वतीसहितोब्रह्माश्रीसहितो
विष्णुर्नैर्ऋत्यामुमयाशिवो वायव्यांषट्
कोणेचक्रमध्यस्थमध्यबीजेश्रीमहाल
क्ष्मीः ॥ ह्रींमहाकाली ऐंमहासरस्वती द
क्षिणवामयोः ॥ उदक्सिंहोदक्षिणेमहि
षः ॥ षट्कोणेषुनंदजारक्तदंतिकाशाकं

भरीदुर्गाभीमाभ्रामर्य्यः ॥ सबिंदुनामा
द्यवर्णताराद्याश्चासांनाममंत्राःपुजादौ ॥
तारःप्रणवः ॥ अष्टपत्रेषुब्रह्माणीमाहेश्व
रीकौमारीवैष्णवीवाराहीनारसिंहीऐंद्री
चामुंडाउक्तरीत्यानाममंत्रैःपूज्याः ॥ त
तो विष्णुमायादिचतुर्विंशतिदेवताः प्रा

गादिक्रमेणकेसरेषुपूज्याः ॥ प्रतिपत्त्रंच केसरत्त्रयम् ॥ ताश्च विष्णुमाया १ चेतना २ बुद्धि ३ निद्रा ४ क्षुधा ५ छाया ६ शक्ति ७ तृष्णा ८ क्षान्ति ९ जाति १० लज्जा ११ शांति १२ श्रद्धा १३ कांति १४ लक्ष्मी १५ धृति १६ वृत्ति १७

स्मृति १८ दया १९ तुष्टि २० पुष्टि २१
मातृ २२ भ्रांति २३ चिति २४ रूपाएता
वत्यः ॥ सप्तशतीस्तवेपंचमेध्यायेआसां
चतुर्विंशतीनांनपाठइतिनभ्रमितव्यम् ॥
कात्यायनीतंत्रविरोधात् ॥ नालमूलेतु
संपूज्यमाधवादिचतुष्टयम् ॥ आधारः

कर्मशेषौचचतुर्थीपृथिवीनृप ॥ गृहको
णेषुगणेशः क्षेत्रपालोबटुकोयोगिन्यः॥
प्रागादिदिक्षुइंद्राद्याश्चेति ॥ एवंचतुर्दिनं
कुर्यात्॥तत्रप्रथमेह्निएकावृत्तिर्द्वितीयेद्वे
तृतीयेतिस्रश्चतुर्थेचतस्रइति ॥ पंचमेहो
मः ॥होमद्रव्याणि ॥ पायसान्नैस्त्रिमध्व

त्कैर्द्राक्षारंभाफलादिभिः ॥मातुलुंगैरिक्षु
खंडैर्नालिकेरयुतैस्तिलैः ॥जातीफलैरा
म्रफलैरन्यैर्मधुरवस्तुभिरिति ॥ सप्तश
त्यादशावृत्त्याप्रतिमंत्रंहुतंचरेत् ॥अयुतं
चनवार्णेनस्थापितेऽग्नौविधानतः ॥ कृ
त्वावरणदेवानांहोमंतन्नाममंत्रतः ॥ कृ

त्वापूर्णाहुतिंसम्यग्देवमग्निंविसृज्यच॥
अभिषिंचेच्चयष्टारंविप्रौघःकलशोदकैः
॥ निष्कंसुवर्णमथवाप्रत्येकंदक्षिणांदि
शेत्॥भोजयेच्चशतंविप्रान्भक्ष्यभोज्यैः
पृथग्विधैः ॥ तेभ्योपिदक्षिणांदत्वागृही
यादाशिषस्तथा ॥ एवंकृतेजगद्वश्यंसर्वं

नश्यंत्युपद्रवाः॥ ॥इतिशतचंण्डीविधिःसमाप्तः॥

## इतिप्रयोगविधिःसमाप्तः

श्रीगणेशाय नमः ॥ ॥ अद्येत्यादि० श्री
महाकाली महालक्ष्मी महासरस्वतीदेव
ताप्रीत्यर्थं चंडीसप्तशतीपाठाख्यं कर्मक
रिष्ये ॥ तदंगत्वेनाऽऽद्यौकवचार्गलाकी
लकपठनमाद्यन्तयोरष्टोत्तरशतसंख्यन
वार्णजपपूर्वकं क्रमेणरात्रिसूक्तदेवीसूक्त

पठनमंतेरहस्यत्रयपठनंचकरिष्ये॥ ॥इ
तिसंकल्प्य ॥ प्रथमं नमोदेव्यैमहादेव्यै
शिवायैसततंनमः ॥ नमःप्रकृत्यैभद्रायै
नियताःप्रणताःस्मतां ॥ इतिमंत्रेणपंचो
पचारैःपुस्तकपूजांकुर्य्यात्॥ श्रीरस्तु ॥
श्रीगणेशायनमः॥ ॥ ॐनमश्चण्डिकायै

॥ ॥ मार्कण्डेयउवाच ॥ ॥ ॐयद्गुह्यंपर
मंलोकेसर्वरक्षाकरंनृणाम् ॥ यन्नकस्य
चिदाख्यातंतन्मेब्रूहिपितामह॥ १ ॥ ॥ब्र
ह्मोवाच ॥ ॥ अस्तिगुह्यतमंविप्रसर्वभू
तोपकारकम् ॥देव्यास्तुकवचम्पुण्यन्त
च्छृणुष्वमहामुने ॥ २ ॥प्रथमंशैलपुत्री

चद्वितीयंब्रह्मचारिणी ॥ तृतीयश्चन्द्रघ
ण्टेतिकूष्माण्डेतिचतुर्थकम् ॥ ३ ॥ पंच
मंस्कन्दमातेतिषष्ठङ्कात्यायनीतिच ॥स
प्तमङ्कालरात्रीतिमहागौरीतिचाष्टमम् ॥
४ ॥नवमंसिद्धिदात्रीचनवदुर्गाःप्रकीर्ति
ताः ॥ उक्तान्येतानिनामानिब्रह्मणैवम

हात्मना ॥ ५॥ अग्निनादह्यमानस्तुशत्रु
मध्येगतोरणे॥विषमेदुर्गमेच्चैवभयार्ताः
शरणङ्गताः ॥ ६ ॥ नतेषाञ्जायतेकिञ्चि
दशुभंरणसंकटे॥नापदन्तस्यपश्यामिशो
कदुःखभयन्नहि ॥ ७ ॥ यैस्तुभक्त्यास्मृ
तानूनंतेषांवृद्धिःप्रजायते ॥ येत्वांस्मरं

दे. ३

तिदेवेशिरक्षसेतान्नसंशयः ॥ ८ ॥ प्रेतसं
स्थातुचामुण्डावाराहीमहिषासना ॥ ऐ
न्द्रीगजसमारूढावैष्णवीगरुडासना ॥
॥ ९ ॥माहेश्वरीवृषारूढाकौमारीशिखि
वाहना ॥लक्ष्मीःपद्मासनादेवीपद्महस्ता
हरिप्रिया॥ १०॥ श्वेतरूपधरादेवीईश्व

क. ३

रीवृषवाहना ॥ ब्राह्मीहंससमारूढासर्वा
भरणभूषिता ॥ ११ ॥ इत्येतामातरस्स
र्वाःसर्वयोगसमन्विताः॥ नानाभरणशो
भाढ्यानानारत्नोपशोभिताः ॥१२ ॥ दृ
श्यंतेरथमारूढादेव्यःक्रोधसमाकुलाः॥
शङ्खचक्रगदांशक्तिंहलञ्चमुसलायुधम्॥

खेटकन्तोमरञ्चैवपरशुम्पाशमेवच ॥
१३ कुन्तायुधन्त्रिशूलञ्चशार्ङ्गमायुध
मुत्तमम् ॥ दैत्यानांदेहनाशायभक्तानाम
भयायच ॥ १४ ॥ धारयन्त्यायुधानी
त्थंदेवानाञ्चहितायवै ॥नमस्तेस्तुमहारौ
द्रेमहाघोरपराक्रमे ॥ १५॥ महाबलेमहो

त्साहेमहाभयविनाशिनि ॥त्राहिमांदेवि
दुष्प्रेक्ष्येशत्रूणाम्भयवर्द्धिनि ॥ १६ ॥
प्राच्यांरक्षतुमामैन्द्री आग्नेय्यामग्निदेव
ता ॥ दक्षिणेऽवतुवाराहीनैर्ऋत्यांखड्गधा
रिणी ॥ १७ ॥ प्रतीच्यांवारुणीरक्षेद्वाय
व्यांमृगवाहिनी ॥ उदीच्यांपातुकौमारी

ईशान्यांशूलधारिणी ॥१८॥ ऊर्ध्वंब्रह्मा
णीमेरक्षेदधस्ताद्वैष्णवीतथा ॥ एवन्दश
दिशोरक्षेच्चामुण्डाशववाहना ॥१९॥ ज
यामेचाग्रतःपातुविजयापातुपृष्ठतः॥अ
जितावामपार्श्वेतुदक्षिणेचापराजिता
॥२०॥शिखामुद्योतिनीरक्षेदुमामूर्ध्निव्य

वस्थिता ॥ मालाधरीललाटेचभ्रुवौरक्षे
द्यशस्विनी ॥२१॥ त्रिनेत्राचभ्रुवोर्मध्ये
यमघण्टाचनासिके ॥ शंखिनीचक्षुषो
र्मध्येश्रोत्रयोर्द्वारवासिनी ॥२२॥ कपो
लौकालिकारक्षेत्कर्णमूलेतुशाङ्करी ॥
नासिकायांसुगन्धाच उत्तरोष्ठेच चर्चि

का ॥२३॥ अधरेचामृतकलाजिव्हायां
चसरस्वती ॥ दन्तान्रक्षतुकौमारीकण्ठ
देशेतुचाण्डिका ॥ २४ ॥ घण्टिकांचित्र
घण्टाचमहामायाचतालुके ॥ कामाक्षी
चिबुकंरक्षेद्वाचंमेसर्वमङ्गला ॥२५॥ ग्री
वायाम्भद्रकालीचपृष्ठवंशेधनुर्धरी॥नी

लग्रीवाबहि:कण्ठेनलिकांनलकूबरी ॥
॥ २६ ॥ स्कन्धयो:खड्गिनीरक्षेद्बाहूमेव
ज्रधारिणी ॥ हस्तयोर्दण्डिनीरक्षेदंबिका
चाङ्गुलीषुच॥२७॥नखाञ्छूलेश्वरीर
क्षेत्कुक्षौरक्षेत्कुलेश्वरी ॥स्तनौरक्षेन्महा
देवीमनश्शोकविनाशिनी ॥ २८ ॥ हृद

येललितादेवीउदरेशूलधारिणी ॥ नाभौ
चकामिनीरक्षेद्गुह्यंगुह्येश्वरीतथा ॥ २९
पूतनाकामिकामेढ्रंगुदेमहिषवाहिनी ॥
कट्याम्भगवती रक्षेज्जानुनी विन्ध्यवा
सिनी ॥३०॥ जंघेमहाबलारक्षेत्सर्वका
मप्रदायिनी ॥ गुल्फयोर्नारसिंहीचपाद

पृष्ठेतुतैजसी ॥ ३१॥ पादाङ्गुलीषुश्रीर
क्षेत्पादाधःस्थलवासिनी ॥ नखान्दंष्ट्रा
करालीचकेशांश्चैवोर्ध्वकेशिनी ॥३२॥
रोमकूपेषुकौमारीत्वचंवागीश्वरीतथा
रक्तमज्जावसामांसान्यस्थिमेदांसिपार्व
ती॥३३॥अन्त्राणिकालरात्रीचपित्तंच

मुकुटेश्वरी ॥ पद्मावतीपद्मकोशेकफेचू
डामणिस्तथा ॥३४॥ज्वालामुखीनसा
जालमभेद्यासर्वसंधिषु ॥ शुक्रंब्रह्माणी
मेरक्षेच्छायांछत्रेश्वरीतथा॥३५॥अहं
कारम्मनोबुद्धिंरक्षेन्मेधर्म्मधारिणी॥प्रा
णापानौ तथाव्यानमुदानञ्च समानक

म् ॥ ३६ ॥ वज्रहस्ताचमेरक्षेत्प्राणकल्प
श्चशोभना ॥ रसेरूपेचगन्धेचशब्देस्पर्शे
चयोगिनी ॥ ३७ ॥ सत्त्वंरजस्तमश्चैव
रक्षेन्नारायणी सदा ॥ आयूरक्षतुवाराही
धर्म्मंरक्षतुवैष्णवी ॥ ३८ ॥ यशःकीर्तिं
ञ्चलक्ष्मीश्चधनंविद्याञ्चचक्रिणी ॥ गो

त्रमिन्द्राणिमेरक्षेत्पशून्मेरक्षचण्डिके ॥
॥ ३९ ॥पुत्रान्रक्षेन्महालक्ष्मीर्भार्यांरक्ष
तुभैरवी ॥ पन्थानंसुपथारक्षेन्मार्गंक्षेम
करीतथा ॥४०॥ राजद्वारेमहालक्ष्मीर्वि
जयासर्वतःस्थिता ॥ रक्षाहीनंतुयत्स्था
नंवर्जितंकवचेनतु ॥ ४१ ॥ तत्सर्वंरक्ष

मेदेविजयन्तीपापनाशिनी ॥ पदमेकंन
गच्छेत्तुयदीच्छेच्छुभमात्मनः॥४२॥क
वचेनावृतोनित्यंयत्रयत्रैवगच्छति ॥त
त्रतत्रार्थलाभश्चविजयस्सार्वकामिकः
॥४३॥ यंयंचिन्तयतेकामन्तन्तम्प्राप्नो
तिनिश्चितम् ॥ परमैश्वर्यमतुलम्प्राप्स्य

तेभूतलेपुमान् ॥ ४४ ॥ निर्भयोजायते
मर्त्यस्सङ्ग्रामेष्वपराजितः ॥ त्रैलोक्ये
तुभवेत्पुज्यःकवचेनावृतःपूमान् ॥ ४५
इदंतुदेव्याः कवचंदेवानामपिदुर्लभम् ॥
यःपठेत्प्रयतोनित्यंत्रिसंध्यंश्रद्धयान्वि
तः ॥४६॥ दैवीकलाभवेत्तस्यत्रैलोक्ये

ष्वपराजितः ॥ जीवेद्वर्षशतंसाग्रमपमृ
त्युविवर्जितः ॥ ४७ ॥ नश्यन्तिव्याधय
स्सर्वैर्लूताविस्फोटकादयः ॥ स्थावरञ्ज
ङ्गमञ्चैवकृत्रिमञ्चापियद्विषम् ॥ ४८ ॥
अभिचाराणिसर्वाणि मन्त्रयन्त्राणिभू
तले ॥ भूचराःखेचराश्चैवकुलजाश्चोप

देशिकाः ॥ ४९ ॥ सहजाकुलजामाला
डाकिनीशाकिनीतथा ॥ अन्तरिक्षचरा
घोराडाकिन्यश्चमहाबलाः ॥ ५० ॥ ग्रह
भूतपिशाचाश्चयक्षगन्धर्वराक्षसाः ॥ ब्र
ह्मराक्षसवेतालाःकूश्माण्डाभैरवादयः ॥
॥ ५१ ॥ नश्यंतिदर्शनात्तस्यकवचेत्हृदि

संस्थिते ॥ मानोन्नतिर्भवेद्राज्यंतेजोवृ
द्धिकरंपरम् ॥ ५२ ॥ यशसावर्धतेसोऽ
पिकीर्तिमण्डितभूतले ॥ जपेत्सप्तशतीं
चण्डींकृत्वातुकवचंपुरा ॥ ५३ ॥ याव
द्भूमण्डलंधत्तेसशैलवनकाननम्॥ ताव
त्तिष्ठतिमेदिन्यांसन्ततिःपुत्रपौत्रिकी ॥

॥ ५४ ॥ देहान्तेपरमंस्थानंयत्सुरैरपिदु
र्लभम् ॥ प्राप्नोतिपुरुषोनित्यंमहामाया
प्रसादतः ॥५५॥ लभतेपरमंरूपंशिवेन
सहमोदते ॥ ५६ ॥ इतिवाराहपुराणेहरि
हरब्रह्मविरचितंदेव्याःकवचंसमाप्तम् ॥
ॐनमश्चण्डिकायै ॥ जयन्तीमङ्गलाका

लीभद्रकालीकपालिनी ॥ दुर्गाक्षमाशि
वाधात्रीस्वाहास्वधानमोस्तुते ॥ १ ॥
जयत्वन्देवि चामुण्डे जयभूतार्तिहारि
णि ॥ जयसर्व्वगतेदेविकालरात्रिनमो
स्तुते ॥ २॥ मधुकैटभविद्राविविधातृव
रदेनमः ॥रूपंदेहिजयंदेहियशोदेहिद्विषो

जहि ॥ ३॥ महिषासुरनिर्णाशिभक्तानां
सुखदेनमः ॥ रूपंदेहिजयंदेहियशोदेहि
द्विषोजहि ॥ ४ ॥ रक्तबीजवधेदेविचण्ड
मुण्डविनाशिनि ॥रूपंदेहिजयंदेहियशो
देहिद्विषोजहि ॥ ५ ॥ शुंभस्यैवनिशुंभ
स्यधूम्राक्षस्यचमर्दिनि ॥ रूपंदेहिजयं

देहियशोदेहिद्विषोजहि ॥ ६ ॥ वन्दितां
घ्रियुगेदेविसर्वसौभाग्यदायिनि ॥ रूपं
देहिजयंदेहियशोदेहिद्विषोजहि ॥ ७ ॥
अचिन्त्यरूपचरितेसर्वशत्रुविनाशिनि
॥ रूपंदेहिजयंदेहियशोदेहिद्विषोजहि ॥
॥८॥नतेभ्यस्सर्वदाभक्त्याचण्डिकेदुरि

तापहे ॥ रूपंदेहिजयंदेहियशोदेहिद्विषो
जहि ॥९॥ स्तुवद्भ्योभक्तिपूर्वंत्वांचण्डि
केव्याधिनाशिनि ॥ रूपंदेहिजयंदेहिय
शोदेहिद्विषोजहि ॥ १० ॥ चण्डिकेसत
तंयेत्वामर्चयन्तीहभक्तितः ॥रूपंदेहिज
यंदेहियशोदेहिद्विषोजहि ॥ ११ ॥ देहि

सौभाग्यमारोग्यंदेहिमेपरमंसुखं ॥ रूपं
देहिजयंदेहियशोदेहिद्विषोजहि ॥१२॥
विधेहिद्विषतांनाशंविधेहिबलमुच्चकैः ॥
रूपंदेहिजयंदेहि यशोदेहिद्विषोजहि ॥
॥ १३ ॥ विधेहिदेविकल्याणंविधेहिपर
मांश्रियम् ॥ रूपंदेहिजयंदेहियशोदेहि

द्विषोजहि ॥१४॥ सुरासुरशिरोरत्ननिघृ
ष्टचरणेम्बिके ॥ रूपंदेहिजयंदेहियशोदे
हिद्विषोजहि ॥१५॥ विद्यावन्तंयशस्व
न्तंलक्ष्मीवन्तजनंकुरु ॥ रूपंदेहिजयंदे
हियशोदेहिद्विषोजहि ॥१६॥ प्रचण्डदै
त्यदर्पघ्नेचण्डिकेप्रणतायमे ॥ रूपंदेहि

जयंदेहियशोदेहिद्विषोजहि ॥१७॥ च
तुर्भुजेचतुर्वक्त्रसंस्तुतेपरमेश्वरि ॥ रूपं
देहिजयंदेहियशोदेहिद्विषोजहि ॥१८॥
कृष्णेनसंस्तुतेदेवि शश्वद्भक्त्यासदांबि
के॥ रूपंदेहिजयंदेहियशोदेहिद्विषोजहि
॥ १९ ॥ हिमाचलसुतानाथसंस्तुतेपर

मेश्वरि ॥ रूपंदेहिजयंदेहियशोदेहिद्विषो
जहि ॥ २० ॥ इन्द्राणीपतिसद्भावपूजि
तेपरमेश्वरि ॥ रूपंदेहिजयंदेहियशोदेहि
द्विषोजहि ॥ २१ ॥ देविप्रचण्डदोर्दण्ड
दैत्यदर्प्पविनाशिनि ॥ रूपंदेहिजयंदेहि
यशोदेहिद्विषोजहि ॥ २२ ॥ देविभक्तज

नोद्दामदत्तानन्दोदयेम्बिके ॥ रूपंदेहिज
यंदेहियशोदेहिद्विषोजहि ॥२३॥ पत्नींम
नोरमांदेहिमनोवृत्तानुसारिणीम् ॥ तारि
णींदुर्गसंसारसागरस्यकुलोद्भवाम् ॥२४
इदंस्तोत्रंपठित्वातुमहास्तोत्रंपठेन्नरः ॥
सतुसप्तशतीसंख्यावरमाप्नोतिसंपदाम् ॥

॥२५॥ इतिमार्कंण्डेयपुराणेअर्गलास्तो
त्रंसमाप्तम् ॥ २ ॥ ॐनमश्चंडिकायै ॥ मा
र्कण्डेयउवाच ॥ विशुद्धज्ञानदेहायत्रिवे
दीदिव्यचक्षुषे ॥ श्रेयःप्राप्तिनिमित्ताय
नमस्सोमार्द्धधारिणे ॥ १ ॥ सर्वमेतद्वि
जानीयान्मन्त्राणामपिकीलकम् ॥ सो

पिक्षेममवाप्नोतिसततजाप्यतत्परः ॥ २

सिद्ध्यन्त्युच्चाटनादीनिवस्तूनि सकला

न्यपि ॥ एतेनस्तुवतांदेवींस्तोत्रमात्रेण

सिद्ध्यति ॥ ३॥ नमन्त्रंनौषधन्तत्रनाकि

ञ्चिदपिविद्यते ॥ विनाजाप्येनसिद्ध्येत

सर्वमुच्चाटनादिकम् ॥ ४॥ समग्राण्यपि

सिद्ध्यन्तिलोकशंकामिमांहरः ॥ कृत्वा
निमंत्रयामाससर्वमेवमिदंशुभम् ॥ ५॥
स्तोत्रंवैचण्डिकायास्तु तच्चगुप्तञ्चकार
सः ॥ समाप्नोतिसुपुण्येनतांयथावन्नि
यन्त्रणां ॥ ६ ॥ सोपिक्षेममवाप्नोतिस
र्वमेवनसंशयः ॥ कृष्णायांवाचतुर्दश्या

मष्टम्यांवासमाहितः ॥ ७ ॥ ददातिप्रति
गृह्णातिनान्यथैषाप्रसिद्ध्यति ॥ इत्थंरू
पेणकीलेनमहादेवेनकीलितम् ॥ ८ ॥
योनिष्कीलांविधायैनां नित्यञ्जपतिसं
स्फुटं ॥ ससिद्धःसगणस्सोपिगन्धर्वो
जायतेनरः ॥ ९ ॥ नचैवाप्यटतस्तस्य

भयंक्कापिहिजायते ॥नाऽपमृत्युवशंया
तिमृतोमोक्षमवाप्नुयात् ॥ १० ॥ ज्ञात्वा
प्रारभ्यकुर्वीतनकुर्वाणोविनश्यति ॥ त
तोज्ञात्वैवसंपन्नमिदंप्रारभ्यतेबुधैः॥११
सौभाग्यादि च यत्किञ्चिद्दृश्यतेललना
जने ॥ तत्सर्वंत्वत्प्रसादेनतेनजाप्यामि

दंशुभम् ॥ १२ ॥ शनैस्तुजप्यमानेस्मिं
स्तोत्रेसंपत्तिरुच्चकैः॥भवत्येवसमग्रापि
ततःप्रारभ्यमेवतत् ॥ ॥ १३ ॥ ऐश्वर्यं
यत्प्रसादेनसौभाग्यारोग्यसंपदः ॥ शत्रु
हानिःपरोमोक्षःस्तूयतेसानकिंजनैः ॥
॥ १४॥ इतिभगवत्याःकीलकस्तोत्रंस

मासम् ॥ ३ ॥ शुभंभूयात्॥श्रीगणपति
र्जयति ॥ ॐअस्यश्रीनवार्णमंत्रस्य ॥
ब्रह्मविष्णुरुद्राऋषयः ॥ गायत्र्युष्णिग
नुष्टुप्छंदांसि॥श्रीमहाकालीमहालक्ष्मी
महासरस्वत्योदेवताः ॥ ऐंबीजं ॥ ह्रींश
क्तिः ॥ क्लींकीलकं ॥ श्रीमहाकालीमहा

लक्ष्मीमहासरस्वतीप्रीत्यर्थं जपेविनि
योगः॥ब्रह्मविष्णुरुद्रऋषिभ्योनमःशिर
सि ॥ गायत्र्युष्णिगनुष्टुप्छंदोभ्योनमः
मुखे ॥ महाकालीमहालक्ष्मीमहासरस्व
तीदेवताभ्योनमःहृदि ॥ ऐंबीजायनमः
गुह्ये ॥ ह्रींशक्तयेनमःपादयोः ॥ क्लींकी

लकायनमःनाभौ ॥ इतिमूलेनकरौसं
शोध्य ॥ ॐऐंअंगुष्ठाभ्यांनमः ॥ ॐह्रीं
तर्जनीभ्यांनमः ॥ ॐक्लींमध्यमाभ्यांन
मः॥ ॐचामुंडायैअनामिकाभ्यांनमः॥
ॐविच्चेकनिष्ठिकाभ्यांनमः ॥ ॐऐंह्रीं
क्लींचामुंडायैविच्चेकरतलकरपृष्ठाभ्यांन

मः ॥एवंहृदयादि ॥ ततोऽक्षरन्यासः ॥ ॐऐंनमःशिखायां ॥ ॐह्रींनमःदक्षिणनेत्रे॥ॐक्लींनमःवामनेत्रे ॥ ॐचांनमः दक्षिणकर्णे ॥ ॐमुंनमःवामकर्णे ॥ ॐडांनमःदक्षिणनासायां ॥ ॐयैंनमःवामनासायां॥ॐविंनमःमुखे ॥ ॐच्चेंनमः

गुह्ये ॥एवंविन्यस्याष्टवारंमूलेनव्यापकं
कुर्यात् ॐऐंप्राच्यैनमः ॥ ॐऐंआग्नेय्यै
नमः॥ ॐ ह्रींदक्षिणायैनमः ॥ ॐह्रींनै
र्ऋत्यैनमः ॥ ॐक्लींप्रतीच्यैनमः ॥ ॐक्लीं
वायव्यैनमः ॥ॐचामुंडायैउदीच्यैनमः
ॐचामुंडायैईशान्यैनमः ॥ ॐऐंह्रींक्लीं

चामुंडायैविच्चेऊर्ध्वायैनमः ॥ ॐऐंह्रीं
क्लींचामुंडायैविच्चेभूम्यैनमः ॥ अथध्या
नं ॥ खड्गंचक्रगदेषुचापपरिघान्शूलंभु
शुंडींशिरः शंखंसंदधतींकरैस्त्रिनयनांस
र्वांगभूषावृतां ॥ नीलाश्मद्युतिमास्यपा
ददशकांसेवेमहाकालिकां यामस्तौत्स्व

पितेहशौकमलजोहंतुंमधुंकैटभं ॥ १ ॥
अक्षस्रक्परशुं गदेषुकुलिशं पद्मं धनुःकुं
डिकांदंडंशक्तिमसिंचचर्मजलजंघंटांसु
राभाजनं ॥ शूलंपाशसुदर्शनेचदधतींह
स्तैःप्रसन्नाननांसेवेसैरिभमर्दिनीमिहम
हालक्ष्मींसरोजस्थितां ॥ २ ॥ घंटांशूल

हलानिशंखमुसले चक्रंधनुःसायकं ह
स्ताब्जैर्दधतीं घनांतविलसच्छीतांशुतु
ल्यप्रभां ॥ गौरीदेहसमुद्भवांत्रिनयना
माधारभूतांमहापूर्वांमत्रसरस्वतीमनुभ
जेच्छुंभादिदैत्यार्दिनीं ॥ ३ ॥ अष्टोत्तरश
तसंख्ययामंत्रराजंजपेत् ॥ इतिनवार्ण

विधिः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
अथरात्रिसूक्तम् ॥ विश्वेश्वरींजगद्धात्रीं
स्थितिसंहारकारिणीं ॥ निद्रांभगवतींवि
ष्णोरतुलांतेजसःप्रभुः ॥ १ ॥ ब्रह्मोवाच ॥
त्वंस्वाहा त्वंस्वधात्वंहिवषट्कारःस्वरा
त्मिका ॥ सुधात्वमक्षरेनित्येत्रिधामात्रा

त्मिकास्थिता ॥२॥ अर्धमात्रास्थितानि
त्यायानुच्चार्याविशेषतः ॥ त्वमेवसंध्या
सावित्रीत्वंदेविजननीपरा ॥३॥ त्वयैत
द्धार्यतेविश्वंत्वयैतत्सृज्यतेजगत् ॥ त्व
यैतत्पाल्यतेदेवित्वमत्स्यंतेचसर्वदा ॥४
विसृष्टौसृष्टिरूपात्वं स्थितिरूपाचपाल

ने ॥ तथासंहृतिरूपांते जगतोस्यजग
न्मये ॥ ५ ॥ महाविद्यामहामायामहामे
धामहास्मृतिः ॥ महामोहाचभवतीमहा
देवीमहासुरी ॥ ६ ॥ प्रकृतिस्त्वंचसर्वस्य
गुणत्रयविभाविनी ॥ कालरात्रिर्महारा
त्रिर्मोहरात्रिश्चदारुणा ॥ ७ ॥ त्वंश्रीस्त्वमी

श्वरीत्वंन्हीस्त्वंबुद्धिर्बोधलक्षणा ॥ ल
ज्जापुष्टिस्तथातुष्टिस्त्वं शांतिःक्षांतिरेव
च ॥ ८ ॥ खड्गिनीशूलिनीघोरागदिनीच
क्रिणीतथा ॥ शंखिनीचापिनीबाणाभु
शुंडीपरिघायुधा॥ ९॥सौम्यासौम्यतरा
शेषसौम्येभ्यस्त्वतिसुंदरी ॥ परापराणां

परमात्वमेवपरमेश्वरी॥१०॥यच्चकिंचि
त्क्वचिद्वस्तुसदसद्वाखिलात्मिके ॥ तस्य
सर्वस्ययाशक्तिस्सात्वंकिंस्तूयसेतदा ॥
॥ ११ ॥ययात्वयाजगत्स्रष्टाजगत्पात्य
त्तियोजगत् ॥ सोपिनिद्रावशंनीतःक
स्त्वांस्तोतुमिहेश्वरः॥ १२ ॥ विष्णुश्श

रीरग्रहणमहमीशानएवच ॥ कारितास्ते
यतोतस्त्वांकस्स्तोतुंशक्तिमान्भवेत् ॥
॥ १३ ॥ सात्वमित्थंप्रभावैस्स्वैरुदारैर्दे
विसंस्तुता ॥ मोहयैतौ दुराधर्षावसुरौ
मधुकैटभौ॥ १४॥प्रबोधंचजगत्स्वामी
नीयतामच्युतोलघु ॥ बोधश्चक्रियताम

स्यहंतुमेतौमहासुरौ ॥ १५ ॥ ॥ इतिरा
त्रिसूक्तम् ॥ ॥ ॐश्रीगणेशाय नमः ॥
अथसप्तशतीन्यासाः ॥ अथप्रथममध्य
मोत्तमचरित्राणाम् ब्रह्मविष्णुरुद्राऋष
यः ॥ श्रीमहाकालीमहालक्ष्मीमहासर
स्वत्योदेवताः ॥ गायत्र्युष्णिगनुष्टुप्छं

दांसि ॥ नंदाशाकंभरीभीमाःशक्तयः ॥
रक्तदंतिकादुर्गाभ्रामर्यौबीजानि॥अग्नि
र्वायुःसूर्यस्तत्त्वानि॥ ऋग्यजुःसामवेदा
ध्यानानि ॥ सकलकामनासिद्धये श्री
महाकालीमहालक्ष्मीमहासरस्वती देव
ताप्रीत्यर्थंजपेविनियोगः ॥ तत्रादौन्या

सा: ॥ खड्गिनीशूलिनीघोरागदिनीचक्रि
णीतथा ॥ शंखिनीचापिनीभाणाभुशुं
डीपरिघायुधा ॥ अंगुष्ठाभ्यांनमः ॥ शू
लेनपाहिनोदेविपाहिखड्गेनचांबिके ॥
घंटास्वनेननःपाहि चापज्यानिःस्वनेन
च ॥ तर्जनीभ्यांनमः ॥ प्राच्यांरक्षप्रती

च्यांचचंडिकेरक्षदक्षिणे ॥ भ्रामणेना
त्मशूलस्यउत्तरस्यांतथेश्वरि ॥ मध्यमा
भ्यांनमः ॥ सौम्यानियानिरूपाणित्रै
लोक्येविचरंतिते ॥ यानिचात्यर्थघोरा
णितैरक्षास्मांस्तथाभुवम् ॥ अनामिका
भ्यांनमः ॥ खड्गशूलगदादीनियानिचा

स्वाणितैंबिकें ॥ करपल्लवसंगीनितैरस्मा
त्रक्षसर्वतः ॥ कनिष्ठिकाभ्यांनमः ॥ स
र्वस्वरूपेसर्वैंशेसर्वशक्तिसमान्विते ॥ भ
येभ्यस्त्राहिनोदेविदुर्गैंदेविनमोस्तुते ॥ क
रतलकरपृष्ठाभ्यांनमः ॥ एवंहृदयादि ॥
खड्गिनीशूलिनीघोरा० हृदयायनमः ॥

शूलेनपाहिनोदेवि ० शिरसेस्वाहा ॥ प्रा
च्यांरक्षप्रतीच्यांचचं ० शिखायैवषट् ॥
सौम्यानियानिरूपाणि ० कवचायहुं ॥
गड्शूलगदादीनि ० नेत्रत्रयायवौषट् ॥
सर्वस्वरूपेसर्वेशे ० अस्त्रायफट् ॥ अथ
ध्यानं॥विद्युद्दामसमप्रभांमृगपतिस्कंध

स्थितां भीषणां कन्याभिःकरवालखेट
विलसद्धस्ताभिरासेवितां ॥ हस्तैश्चक्रध
रालिखेटविशिखांश्चापं गुणं तर्जनीं बि
भ्राणामनलात्मिकां शशिधरांदुर्गांत्रिने
त्रांभजे ॥ १ ॥ ॥ इतिध्यानम् ॥ ॥ प्र
थमचरित्रस्य ब्रह्माऋषिः ॥ महाका

लीदेवता ॥ गायत्रीछंदः ॥ नंदाश
क्तिः ॥ रक्तदंतिकाबीजं ॥ अग्निस्तत्त्वं॥
ऋग्वेदःस्वरूपं ॥ श्रीमहाकालीप्रीत्यर्थं
प्रथमचरित्रजपेविनियोगः ॥ खड्गंचक्र
गदेषुचापपरिघानशूलंभुशुंडींशिर :शंखं
संदधतींकरैस्त्रिनयनांसर्वाङ्गभूषावृतां ॥

स.
३१

नीलाश्मद्युतिमास्यपाददशकां सेवेमहा
कालिकां यामस्तौत्स्वपितेहरौ कमल
जोहंतुंमधुंकैटभं ॥ ॥ मार्कंडेयउवाच
॥ १ ॥ सावर्णिस्सूर्यतनयोयोमनुःक
थ्यतेष्टमः॥निशामयतदुत्पत्तिंविस्तराद्ग
दतोमम ॥ २ ॥ महामायानुभावेनयथा

अ.
१
३१

मन्वंतराधिपः ॥ सबभूवमहाभागस्सा
वर्णिस्तनयोरवेः ॥ ३ ॥ स्वारोचिषेंतरे
पूर्वंचैत्रवंशसमुद्भवः ॥ सुरथोनामराजा
भूत्समस्तेक्षितिमंडले ॥ ४ ॥ तस्यपाल
यतःसम्यक्प्रजाःपुत्रानिवौरसान् ॥ ब
भूवुश्शत्रवोभूपाःकोलाविध्वंसिनस्तदा

॥ ५ ॥ तस्य तैरभवद्युद्धमतिप्रबलदण्डि
नः ॥ न्यूनैरपिसतैर्युद्धेकोलाविध्वंसि
भिर्जितः ॥ ६ ॥ ततःस्वपुरमायातोनि
जदेशाधिपोभवत् ॥ आक्रांतस्समहाभा
गस्तैस्तदाप्रबलारिभिः ॥ ७ ॥ अमात्यै
र्बलिभिर्दुष्टैर्दुर्बलस्यदुरात्मभिः ॥ कोशो

बलंचापहृतंतत्रापिस्वपुरेततः॥८॥ततो
मृगयाव्याजेनहृतस्वाम्यस्सभूपतिः॥
एकाकीहयमारुह्यजगामगहनंवनम् ९
सतत्राश्रममद्राक्षीद्द्विजवर्यस्यमेधसः॥
प्रशांतश्वापदाकीर्णंमुनिशिष्योपशोभि
तम्॥१०॥ तस्थौकंचित्सकालंचमुनि

नातेनसत्कृतः॥ इतश्चेतश्चविचरंस्तस्मि
न्मुनिवराश्रमे ॥ ११॥ सोचिंतयत्तदात
त्रममत्वाकृष्टचेतनः ॥ मत्पूर्वैःपालितंपू
र्वंमयाहीनंपुरंहितत् ॥ १२॥ मद्भृत्यैस्तै
रसद्वृत्तैर्धर्मतःपाल्यतेनवा ॥ नजानेस
प्रधानोमेशूरहस्तीसदामदः ॥ १३ ॥ म

मवैरिवशंयातःकान्भोगानुपलप्स्यते॥
येममानुगतानित्यंप्रसादधनभोजनैः॥
॥ १४ ॥ अनुवृत्तिंध्रुवंतेद्यकुर्वंत्यन्यम
हीभृताम्॥ असम्यग्व्ययशीलैस्तैःकुर्व
द्भिःसततंव्ययम् ॥१५॥ संचितःसोति
दुःखेनक्षयंकोशोगमिष्यति ॥एतच्चान्य

स. ३४

च्चसततंचिंतयामासपार्थिवः ॥१६॥ तत्रविप्राश्रमाभ्याशेवैश्यमेकंददर्शसः ॥ सपृष्टस्तेनकस्त्वंभोहेतुश्चागमनेऽत्रकः ॥ १७ ॥ सशोकइवकस्मात्त्वंदुर्मनाइवलक्ष्यसे॥इत्याकर्ण्यवचस्तस्यभूपतेःप्रणयोदितम् ॥१८॥ प्रत्युवाचसतंवैश्यः

अ. १ ३४

प्रश्रयावनतोनृपं ॥१९॥ वैश्यउवाच॥
॥२०॥समाधिर्नामवैश्योहमुत्पन्नोधनि
नांकुले ॥२१॥ पुत्रदारैर्निरस्तश्चधनलो
भादसाधुभिः॥ विहीनश्चधनैर्दारैःपुत्रैरा
दायमेधनम् ॥ २२ ॥ वनमभ्यागतोदुः
खीनिरस्तश्चाप्तबंधुभिः ॥ सोहंनवेद्मिपु

त्राणांकुशलाकुशलात्मिकाम् ॥ २३ ॥
प्रवृत्तिंस्वजनानांचदाराणांचात्रसंस्थि
तः॥किंनुतेषांगृहेक्षेममक्षेमंकिंनुसांप्रत
म्॥२४॥ कथंतेकिंनुसद्वृत्तादुर्वृत्ताःकिंनु
मेसुताः ॥ २५॥ राजोवाच ॥२६॥ यै
र्निरस्तोभवाँल्लुब्धैःपुत्रदारादिभिर्धनैः ॥

॥ २७॥ तेषुकिंभवतःस्नेहमनुबध्नातिमा
नसं ॥ २८ ॥ वैश्यउवाच ॥ २९॥ एवमे
तद्यथाप्राहभवानस्मद्गतंवचः ॥ ३० ॥
किंकरोमिनबध्नातिममनिष्ठुरतांमनः ॥
येः संत्यज्यपितृस्नेहंधनलुब्धैर्निराकृतः
॥ ३१ ॥ पतिस्वजनहार्दंचहार्दितेष्वेव

स.
३६

मेमनः ॥ किमेतन्नाभिजानामिजानन्न
पिमहामते ॥ ३२ ॥ यत्प्रेमप्रवणंचित्तं
विगुणेष्वपिबंधुषु ॥ तेषांकृतेमेनिःश्वा
सोदौर्मनस्यंचजायते ॥ ३३ ॥ करोमि
किंयन्नमनस्तेष्वप्रीतिषुनिष्ठुरम् ॥ ३४ ॥
मार्कंडेयउवाच ॥ ३५ ॥ ततस्तौसहितौ

अ.
१
३६

विप्रतंमुनिंसमुपास्थितौ ॥३६॥समाधि
र्नामवैश्योसौसचपार्थिवसत्तमः॥कृत्वा
तुतौयथान्यायंयथार्हंतेनसंविदं ॥३७॥
उपविष्टौकथाः काश्चिच्चक्रतुर्वैश्यपार्थि
वौ ॥ ३८ ॥ राजोवाच ॥ ३९ ॥ भग
वंस्त्वामहंप्रष्टुमिच्छाम्येकंवदस्वतत् ॥

स. ३७

॥ ४०॥ दुःखाययन्मेमनसःस्वचित्ताय
त्ततांविना ॥ ममत्वंगतराज्यस्यराज्यां
गेष्वखिलेष्वपि ॥ ४१ ॥ जानतोपिय
थाज्ञस्यकिमेतन्मुनिसत्तम ॥ अयंचनि
कृतःपुत्रैर्दारैर्भृत्यैस्तथोज्झितः ॥ ४२ ॥
स्वजनेनचसंत्यक्तस्तेषुहार्दीतथाप्यति

अ. १ ३७

॥एवमेषतथाहंचद्वावप्यत्यंतदुःखितौ॥
॥४ ३॥ दृष्टदोषेपिविषयेममत्वाकृष्टमा
नसौ ॥ तत्किमेतन्महाभागयन्मोहोज्ञा
निनोरपि ॥ ४४ ॥ ममास्यचभवत्येषा
विवेकांधस्यमूढता ॥ ४५ ॥ ऋषिरुवा
च ॥ ४६ ॥ ज्ञानमस्तिसमस्तस्यजंतो

विषयगोचरे ॥४७॥ विषयाश्चमहाभा
गयांतिचैवंपृथक्पृथक् ॥ दिवांधाःप्रा
णिनःकेचिद्रात्रावंधास्तथापरे ॥ ४८ ॥
केचिद्दिवा तथारात्रौ प्राणिनस्तुल्यदृष्ट
यः॥ज्ञानिनोमनुजाःसत्यंकिंनुतेनहिके
वलं ४९ यतोहिज्ञानिनःसर्वेपशुपक्षिमृ

गादयः॥ ज्ञानंचतन्मनुष्याणांयत्तेषांमृ
गपक्षिणां॥५०॥मनुष्याणांचयत्तेषांतु
ल्यमन्यत्तथोभयोः ॥ ज्ञानेपिसतिपश्यै
तान्पतङ्गाञ्छावचंचुषु ॥५१॥ कणमो
क्षादृतान्मोहात्पीड्यमानानपिक्षुधा ॥
मानुषामनुजव्याघ्र साभिलाषाः सुता

न्प्रति ॥५२॥ लोभात्प्रत्युपकारायनन्वे
तान्किन्नपश्यसि॥ तथापिममतावर्तैमो
हगर्तैनिपातिताः ॥ ५३ ॥ महामायाप्र
भावेणसंसारस्थितिकारिणा ॥ तन्नात्र
विस्मयःकार्योयोगनिद्राजगत्पतेः ५४
महामायाहरेश्चैषातयासंमोह्यतेजगत्॥

ज्ञानिनामपिचेतांसिदेवीभगवतीहिसा
॥ ५५ ॥ बलादाकृष्यमोहायमहामाया
प्रयच्छति ॥ तयाविसृज्यतेविश्वंजगदे
तच्चराचरं ॥ ५६ ॥ सैषाप्रसन्नावरदानृ
णांभवतिमुक्तये ॥ साविद्यापरमामुक्ते
र्हेतुभूतासनातनी ॥५७॥ संसारबंधहेतु

श्चसैवसर्वेश्वरेश्वरी ॥ ५८॥ राजोवाच ॥ ५९ ॥ भगवन्काहिसादेवीमहामायेतियांभवान् ॥ ६० ॥ब्रवीतिकथमुत्पन्नासाकर्मास्याश्चकिंद्विज ॥ यत्प्रभावाचसादेवीयत्स्वरूपायदुद्भवा ॥ ६१॥ तत्सर्वंश्रोतुमिच्छामि त्वत्तोब्रह्मविदांवर ॥

॥ ६२॥ ऋषिरुवाच ॥६३॥ नित्यैवसा
जगन्मूर्तिस्तयासर्वमिदंततं ॥ ६४ ॥ त
थापितत्समुत्पत्तिर्बहुधाश्रूयतांमम ॥ दे
वानांकार्यसिद्ध्यर्थमाविर्भवतिसायदा
॥ ६५ ॥ उत्पन्नेतितदालोकेसानित्या
प्यभिधीयते ॥ योगनिद्रांयदाविष्णुर्ज

स.
४१

गत्येकार्णवीकृते ॥ ६६ ॥ आस्तीर्यंशे
षमभजत्कल्पांतेभगवान्प्रभुः ॥ तदाद्वा
वसुरौघोरौविख्यातौमधुकैटभौ ॥ ६७ ॥
विष्णुकर्णमलोद्भूतौहंतुंब्रह्माणमुद्यतौ ॥
सनाभिकमलेविष्णोःस्थितोब्रह्माप्रजा
पतिः ॥ ६८ ॥ दृष्ट्वातावसुरौचोग्रौप्रसुप्तं

अ.
१
४१

चजनार्दनं ॥ तुष्टावयोगनिद्रांतामेकाग्र
हृदयःस्थितः॥ ६९ ॥ विबोधनार्थायह
रेर्हरिनेत्रकृतालयां॥विश्वेश्वरींजगद्धा
त्रींस्थितिसंहारकारिणीम् ॥ ७० ॥ नि
द्रां भगवतीं विष्णोरतुलां तेजसः प्रभुः
॥ ७१ ॥ ब्रह्मोवाच ॥ ७२॥ त्वंस्वाहात्वं

स्वधात्वंहिवषट्कारःस्वरात्मिका॥७३
सुधा त्वमक्षरे नित्ये त्रिधामात्रात्मिका
स्थिता ॥ अर्धमात्रास्थितानित्यायानु
च्चार्याविशेषतः ॥७४॥ त्वमेवसंध्यासा
वित्रीत्वंदेविजननीपरा ॥ त्वयैतद्धार्यते
विश्वंत्वयैतत्सृज्यतेजगत् ॥७५॥ त्व

यैतत्पाल्यतेदेवि त्वमत्स्यंतेच सर्वदा ॥
विसृष्टौसृष्टिरूपात्वं स्थितिरूपाचपाल
ने ॥ ७६॥ तथासंहृतिरूपांतेजगतोस्य
जगन्मये ॥ महाविद्यामहामायामहामे
धामहास्मृतिः ॥७७ ॥ महामोहाचभव
तीमहादेवीमहासुरी ॥ प्रकृतिस्त्वंचसर्व

स्यगुणत्रयविभाविनी ॥७८॥ कालरा
त्रिर्महारात्रिर्मोहरात्रिश्चदारुणा ॥ त्वंश्री
स्त्वमीश्वरीत्वं-हीस्त्वंबुद्धिर्बोधलक्षणा
॥७९ ॥लज्जापुष्टिस्तथातुष्टिस्त्वंशांतिः
क्षांतिरेवच ॥ खड्गिनीशूलिनीघोरागदि
नीचक्रिणीतथा॥८०॥ शंखिनीचापिनी

बाणाभुशुंडीपरिघायुधा॥ सौम्यासौम्य
तराशेषसौम्येभ्यस्त्वतिसुंदरी ॥ ८१ ॥
परापराणांपरमात्वमेवपरमेश्वरी ॥ यच्च
किंचित्क्वचिद्वस्तुसदसद्वाखिलात्मिके॥
॥८२॥ तस्यसर्वस्ययाशक्तिस्सात्वंकिं
स्तूयसेतदा ॥ ययात्वयाजगत्स्रष्टाजग

त्पात्यत्तियोजगत् ॥ ८३ ॥ सोपिनिद्रा
वशंनीतःकस्त्वांस्तोतुमिहेश्वरः ॥ वि
ष्णुश्शरीरग्रहणमहमीशानएवच॥८४॥
॥ कारितास्तेयतोतस्त्वांकस्स्तोतुंशक्ति
मान्भवेत् ॥ सात्वमित्थंप्रभावैस्स्वैरुदा
रैर्देविसंस्तुता ॥८५॥ मोहयैतौदुराधर्षा

वसुरौमधुकैटभौ ॥ प्रबोधंचजगत्स्वा
मीनीयतामच्युतोलघु ॥८६॥ बोधश्च
क्रियतामस्यहंतुमेतौमहासुरौ ॥ ८७ ॥
ऋषिरुवाच ॥ ८८ ॥ एवंस्तुतातदादेवी
तामसीतत्रवेधसा ॥८९॥ विष्णोःप्रबो
धनार्थायनिहंतुंमधुकैटभौ॥नेत्रास्यना

सिकाबाहुत्हृदयेभ्यस्तथोरसः ॥ १० ॥
॥निर्गम्यदर्शनेतस्थौब्रह्मणोव्यक्तजन्म
नः ॥उत्तस्थौचजगन्नाथस्तयामुक्तोज
नार्दनः ॥ ११ ॥ एकार्णवेहिशयनात्ततः
सदद्दृशेचतौ ॥मधुकैटभौदुरात्मानावति
वीर्यपराक्रमौ ॥१३ ॥ क्रोधरक्तेक्षणाव

त्वं ब्रह्माणं जनितोद्यमौ ॥ समुत्थाय ततस्ताभ्यां युयुधे भगवान्हरिः ॥१३॥ पंचवर्षसहस्राणि बाहुप्रहरणो विभुः ॥ तावप्यतिबलोन्मत्तौ महामायाविमोहितौ ॥ ॥१४॥ उक्तवंतौ वरोस्मत्तो व्रियतामिति केशवं ॥१५॥ भगवानुवाच ॥ १६॥ भवे

तामद्यमेतुष्टौममवध्यावुभावपि॥९७॥
किमन्येन वरेणात्र एतावद्धिवृतंमया
॥९८॥ऋषिरुवाच॥९९॥वंचिताभ्या
मितितदासर्वमापोमयंजगत्॥ १००॥
विलोकयताभ्यांगदितो भगवान्कमले
क्षणः॥ आवांजहिनयत्रोर्वीसलिलेनप

रिपुता ॥ १ ॥ ऋषिरुवाच ॥२॥ तथेत्यु
क्त्वाभगवताशंखचक्रगदाभृता ॥कृत्वा
चक्रेणवैछिन्नेजघनेशिरसीतयोः ॥ ३॥
एवमेषासमुत्पन्नाब्रह्मणासंस्तुतास्वयं॥
प्रभावमस्यादेव्यास्तु भूयःशृणु वदामि
ते ॥ १०४ ॥ इतिमार्कण्डेयपुराणेसाव

णिंकेमन्वंतरेदेवीमाहात्म्ये मधुकैटभव
धोनामप्रथमोध्यायः॥ १ ॥ उवाच ॥
॥१४॥ अर्ध ॥२४॥ श्लो० ॥६६॥एवं॥
॥ १०४ ॥ ॥मध्यमचरितस्य विष्णु
र्ऋषिः॥महालक्ष्मीर्दैवता॥ उष्णिकूछंदः
॥शाकंभरीशक्तिः ॥ दुर्गाबीजं ॥ वायु

स्तत्त्वं॥यजुर्वेदःस्वरूपं ॥महालक्ष्मीप्री
त्यर्थंमध्यमचरितजपेविनियोगः ॥ ॐ
अक्षस्रक्परशुंगदेषुकुलिशंपद्मंधनुःकुंडि
कांदंडंशक्तिमसिंचचर्मजलजंघंटांसुरा
भाजनं॥शूलंपाशसुदर्शनेचदधतींहस्तैः
प्रसन्नाननांसेवेसैरिभमर्दिनीमिहमहाल

क्ष्मींसरोजस्थितां ॥ ॥ ऋषिरुवाच ॥
॥ १ ॥ देवासुरमभूद्युद्धंपूर्णमब्दशतंपुरा ॥
महिषेसुराणामधिपेदेवानांचपुरंदरे॥ २॥
तत्रासुरैर्महावीर्यैर्देवसैन्यंपराजितं ॥ जि
त्वाचसकलान्देवानिंद्रोभून्महिषासुरः
॥ ३ ॥ ततःपराजितादेवा.पद्मयोनिंप्रजा

पातिं ॥ पुरस्कृत्य गतास्तत्र यत्रेशगरुडध्वजौ ॥ ४ ॥ यथावृत्तं तयोस्तद्वन्महिषासुरचेष्टितं ॥ त्रिदशाः कथयामासुर्देवाभिभवविस्तरं ॥ ५ ॥ सूर्येंद्राग्न्यनिलेंदूनां यमस्य वरुणस्य च ॥ अन्येषां चाधिकारान्स स्वयमेवाधितिष्ठति ॥ ६ ॥ स्वर्गान्निराकृ

स. ४१ | अ. २

ताःसर्वैतेनदेवगणाभुवि॥विचरंतियथा
मर्त्यांमहिषेणदुरात्मना ॥ ७ ॥ एतद्वःक
थितंसर्वममरारिविचेष्टितं॥शरणंवःप्रप
न्नाःस्मोवधस्तस्यविचिंत्यतां ॥ ८ ॥ इ
त्थंनिशम्यदेवानांवचांसिमधुसूदनः ॥
चकारकोपंशंभुश्चभ्रुकुटीकुटिलाननौ॥

॥९॥ ततोतिकोपपूर्णस्यचक्रिणोवदना
त्ततः॥ निश्चक्राममहत्तेजोब्रह्मणश्शंकर
स्यच ॥१०॥ अन्येषांचैवदेवानांशक्रा
दीनांशरीरतः ॥ निर्गतंसुमहत्तेजस्तच्चै
क्यंसमगच्छत ॥११॥ अतीवतेजसः
कूटंज्वलंतमिवपर्वतं ॥ ददृशुस्तेसुरास्त

स.
५०

त्रज्वालाव्याप्तदिगंतरं ॥ १२ ॥ अतुलं
तत्रतत्तेजःसर्वदेवशरीरजं ॥ एकस्थंतद
भून्नारीव्याप्तलोकत्रयंत्विषा ॥ १३॥ य
दभूच्छांभवंतेजस्तेनाजायततन्मुखं ॥
याम्येनचाभवन्केशाबाहवोविष्णुतेज
सा ॥१४॥सौम्येनस्तनयोर्युग्मंमध्यंचैं

अ.
२
५०

द्रेणचाभवत् ॥ वारुणेनचजंघोरूनितं
बस्तेजसाभुवः ॥ १५ ॥ब्रह्मणस्तेजसा
पादौतदंगुल्योर्कतेजसा ॥वसूनांचकरां
गुल्यःकौबेरेणचनासिका॥ १६ ॥तस्या
स्तुदंतास्संभूताःप्राजापत्येन तेजसा ॥
नयनत्रितयंजज्ञे तथा पावकतेजसा ॥

॥१७॥ भुवौचसंध्ययोस्तेजःश्रवणाव
निलस्यच ॥ अन्येषांचैवदेवानांसंभव
स्तेजसांशिवा ॥ १८॥ ततस्समस्तदेवा
नांतेजोराशिसमुद्भवां ॥ तांविलोक्यमु
दंप्रापुरमरामहिषार्दिताः ॥१९॥ शूलंशू
लाद्विनिष्कृष्यददौतस्यैपिनाकधृक् ॥

चक्रंचदत्तवान्कृष्णस्समुत्पाट्य स्वच

क्रतः ॥ २० ॥ शंखंचवरुणश्शक्तिंददौत

स्यैहुताशनः ॥ मारुतोदत्तवांश्चापंबाण

पूर्णौतथेषुधी ॥ २१ ॥ वज्रमिंद्रस्समुत्पा

ट्यकुलिशादमराधिपः ॥ ददौतस्यैसह

स्राक्षोघंटामैरावताद्गजात् ॥२२॥ काल

स.

५२

दंडाद्यमोदंडंपाशंचांबुपतिर्ददौ ॥ प्रजाप
तिश्चाक्षमालांददौब्रह्माकमंडलुं ॥ २३ ॥
समस्तरोमकूपेषुनिजरश्मीन्दिवाकरः॥
कालश्चदत्तवान्खड्गंतस्याश्चर्मचनिर्मलं
॥ २४ ॥ क्षीरोदश्चामलंहारमजरेचतथां
बरे ॥ चूडामणिंतथादिव्यंकुंडलेकटका

अ.

२

५२

निच॥ २५॥अर्धचंद्रंतथाशुभ्रंकेयूरान्स
र्वबाहुषु ॥ नूपुरौविमलौतद्वद्ग्रैवेयकम
नुत्तमं ॥ २६ ॥ अंगुलीयकरत्नानिसम
स्तास्वंगुलीषुच ॥ विश्वकर्माददौतस्यै
परशुंचातिनिर्मलं ॥ २७ ॥ अस्त्राण्यने
करूपाणितथाभेद्यंचदंशनं ॥ अम्लान

स. ५३

पंकजांमालांशिरस्युरसिचापरां॥२८॥
अददज्जलधिस्तस्यैपंकजंचातिशोभनं
॥हिमवान्वाहनंसिंहंरत्नानिविविधानि
च ॥ २९ ॥ ददावशून्यंसुरयापानपा
त्रंधनाधिपः ॥ शेषश्चसर्वनागेशोमहाम
णिविभूषितं ॥ ३० ॥ नागहारंददौतस्यै

अ. २ ५३

धत्तेयःपृथिवीमिमाम् ॥ अन्यैरपिसुरैर्दे
वीभूषणैरायुधैस्तथा ॥ ३१ ॥ सम्मा
नितानननादोच्चैस्साट्टहासंमुहुर्मुहुः ॥ त
स्यानादेनघोरेणकृत्स्नमापूरितंनभः ॥
॥ ३२ ॥ अमायतातिमहताप्रतिशब्दोम
हानभूत् ॥ चुक्षुभुस्सकलालोकास्समु

द्राश्चचकंपिरे ॥ ३३ ॥ चचालवसुधा
चेलुःसकलाश्चमहीधराः ॥ जयेतिदेवा
श्चमुदातामूचुःसिंहवाहिनीम् ॥ ३४ ॥
तुष्टुवुर्मुनयश्चैनांभक्तिनम्रात्ममूर्तयः ॥
दृष्ट्वासमस्तं संक्षुब्धंत्रैलोक्यममरारयः
॥ ३५ ॥ सन्नद्धाखिलसैन्यास्तेसमुत्त

स्थुरुदायुधाः ॥ आः किमेतदिति क्रोधा
दाभाष्य महिषासुरः ॥ ३६ ॥ अभ्यधा
वत तं शब्दमशेषैरसुरैर्वृतः ॥ स ददर्श ततो
देवीं व्याप्तलोकत्रयां त्विषा ॥ ३७ ॥ पा
दाक्रांत्यानतभुवं किरीटोल्लिखितांबरां ॥
क्षोभिताशेषपातालां धनुर्ज्यानिःस्वने

नतां ॥ ३८ ॥ दिशोभुजसहस्रेणसमंता
द्व्याप्यसंस्थितां ॥ ततःप्रववृतेयुद्धंतया
देव्यासुरद्विषां ॥ ३९ ॥ शस्त्रास्त्रैर्बहुधामु
क्तैरादीपितदिगंतरं ॥ महिषासुरसेनानी
श्चिक्षुराख्योमहासुरः ॥४०॥ युयुधेचा
मरश्चान्यैश्चतुरंगबलान्वितः ॥ रथाना

मयुतैःषड्भिरुदग्राख्योमहासुरः ॥४१॥
अयुध्यतायुतानांचसहस्रेणमहाहनुः ॥
पंचाशद्भिश्चनियुतैरसिलोमामहासुरः॥
॥ ४२॥ अयुतानांशतैःषड्भिर्बाष्कलो
युयुधेरणे ॥ गजवाजिसहस्रौघैरनेकैःप
रिवारितः ॥ ४३ ॥ वृतोरथानांकोट्या

चयुद्धेतस्मिन्नयुध्यत ॥ बिडालाख्योयु
तानांचपंचाशद्भिरथायुतैः ॥ ४४ ॥ यु
युधेसंयुगेतत्ररथानांपरिवारितः ॥ अ
न्येचतत्रायुतशोरथनागहयैर्वृताः॥ ४५
युयुधुस्संयुगेदेव्यासहतत्रमहासुराः ॥
कोटिकोटिसहस्रैस्तु रथानांदंतिनांतथा

॥४६॥ हयानांचवृतोयुद्धे तत्राभून्महि
षासुरः॥तोमरैर्भिंदिपालैश्चशक्तिभिर्मुस
लैस्तथा॥४७॥ युयुधुःसंयुगेदेव्याखड्गैः
परशुपट्टिशैः॥ केचिच्चचिक्षिपुश्शक्तीःके
चित्पाशांस्तथापरे॥४८॥ देवींखड्गप्रहारै
स्तुतेतांहंतुंप्रचक्रमुः ॥सापिदेवीततस्ता

निशस्त्राण्यस्त्राणिचण्डिका ॥ ४९ ॥ ली
लयैवप्रचिच्छेदनिजशस्त्रास्त्रवर्षिणी ॥
अनायस्तानना देवी स्तूयमानासुरर्षि
भिः ॥ ५० ॥ मुमोचासुरदेहेषुशस्त्राण्य
स्त्राणिचेश्वरी ॥ सोपिक्रुद्धोधुतसटोदे
व्यावाहनकेसरी ॥ ५१॥ चचारासुरसै

न्येषुवनेष्विवहुताशनः॥ निःश्वासान्मु
मुचेयांश्चयुध्यमानारणेंबिका ॥५२॥त
एवसद्यःसंभूतागणाश्शतसहस्रशः॥युयु
धुस्तेपरशुभिर्भिंदिपालासिपट्टिशैः॥५३
नाशयंतोसुरगणान्देवीशक्त्युपबृंहिताः
॥ अवादयंतपटहान्गणाश्शंखांस्तथाप

स. ५८

रे॥५४॥ मृदंगांश्चतथैवान्येतस्मिन्युद्ध
महोत्सवे॥ततोदेवीत्रिशूलेनगदयाशक्ति
ऋष्टिभिः॥५५॥खड्गादिभिश्चशतशोनि
जघानमहासुरान् ॥ पातयामासचैवा
न्यान्घंटास्वनविमोहितान्॥५६॥असु
रान्भुविपाशेनबत्ध्वाचान्यानकर्षयत्॥

अ. २ ५८

केचिद्द्विधाकृतास्तीक्ष्णैः खड्गपातैस्त
थापरे ॥ ५७ ॥ विपोथितानिपातेनगद
याभुविशेरते ॥ वेमुश्चकेचिद्रुधिरंमुसले
नभृशंहताः॥५८॥ केचिन्निपतिताभूमौ
भिन्नाःशूलेनवक्षसि ॥निरंतराश्शरौघेण
कृताःकेचिद्रणाजिरे ॥५९॥ सेनानुका

रिणःप्राणान्मुमुचुस्त्रिदशार्दनाः ॥ केषां
चिद्बाहवश्छिन्नाश्छिन्नग्रीवास्तथापरे॥
६०॥शिरांसिपेतुरन्येषामन्येमध्येविदा
रिताः ॥ विच्छिन्नजंघास्त्वपरेपेतुरुर्व्यां
महासुराः॥६१॥ एकबाह्वक्षिचरणाःके
चिद्देव्याद्विधाकृताः॥ छिन्नेपिचान्येशि

रसिपातिताःपुनरुत्थिताः॥ ६२॥ कबंधा
युयुधुर्देव्यागृहीतपरमायुधाः॥ननृतुश्चा
परेतत्रयुद्धेतूर्यलयाश्रिताः ॥६३॥ कबं
धाश्छिन्नशिरसःखड्गशक्त्यृष्टिपाणयः॥
तिष्ठतिष्ठेतिभाषंतोदेवीमन्येमहासुराः॥
॥ ६४ ॥ पातितैरथनागाश्वैरसुरैश्चवसुं

धरा ॥ अगम्यासाभवत्तत्रयत्राभूत्सम
हारणः ॥ ६५ ॥ शोणितौघामहानद्यस्स
द्यस्तत्रविसुस्रुवुः ॥ मध्येचासुरसैन्यस्य
वारणासुरवाजिनां ॥ ६६ ॥ क्षणेनतन्म
हासैन्यमसुराणांतथांबिका ॥ निन्येक्ष
यंयथावह्निस्तृणदारुमहाचयं ॥ ६७ ॥

सचासिंहोमहानादमुत्सृजन्धुतकेसरः ॥
शरीरेभ्योमरारीणामसूनिवविचिन्वति
॥६८॥ देव्यागणैश्चतैस्तत्रकृतंयुद्धंतथा
सुरैः ॥ यथैषांतुतुषुर्देवाःपुष्पवृष्टिमुचो
दिवि ॥ ६९॥ इतिमार्कंण्डेयपुराणेसाव
र्णिकेमन्वंतरेदेवीमाहात्म्येमहिषासुरसै

न्यवधोनामद्वितीयोध्यायः ॥ २ ॥ ॥
॥उवाच॥ १ ॥श्लोकाः॥ ६८॥एवं॥ ६९॥
एवमादितः॥ १७३॥ ऋषिरुवाच ॥
॥ १ ॥ निहन्यमानंतत्सैन्यमवलोक्यम
हासुरः ॥ सेनानीश्चिक्षुरःकोपाद्ययौयो
द्धुमथांबिकां ॥ २ ॥ सदेवींशरवर्षैणव

वर्षसमरेऽसुरः॥यथामेरुगिरेःशृंगंतोयव
र्षेणतोयदः ॥ ३ ॥ तस्यच्छित्त्वाततोदे
वीलीलयैवशरोत्करान् ॥ जघानतुरगा
न्बाणैर्यंतारंचैववाजिनां ॥४॥ चिच्छे
दचधनुःसद्योध्वजंचातिसमुच्छ्रितम्॥
विव्याधचैवगात्रेषुच्छिन्नधन्वानमाशु

गेः ॥५॥ सच्छिन्नधन्वाविरथोहताश्वो
हतसारथिः॥ अभ्यधावततांदेवींखड्गच
र्मधरोसुरः ॥ ६ ॥ सिंहमाहत्यखड्गेनती
क्ष्णधारेणमूर्धनि॥ आजघानभुजेसव्ये
देवीमव्यतिवेगवान् ॥ ७॥ तस्याःखड्गो
भुजंप्राप्यपफालनृपनंदन ॥ ततोजग्रा

हशूलंसकोपादरुणलोचनः ॥८॥ चिक्षे
पचततस्तत्तुभद्रकाल्यांमहासुरः ॥ जा
ज्वल्यमानंतेजोभीरविबिंबमिवांबरात्
॥ ९ ॥ दृष्ट्वातदापतच्छूलंदेवीशूलममुंच
त ॥ तच्छूलंशतधातेननीतंसचमहासु
रः ॥ १० ॥ हतेतस्मिन्महावीर्येमहिषस्य

स.
६३

चमूपतौ ॥ आजगामगजारूढश्चामर
स्त्रिदशार्दनः ॥११ ॥सोपिशक्तिंमुमोचा
थदेव्यास्तामंबिकाद्रुतं ॥ हुंकाराभिहतां
भूमौपातयामासनिष्प्रभां ॥१२॥ भग्नां
शक्तिं निपतितां दृष्ट्वा क्रोधसमन्वितः ॥
चिक्षेपचामरःशूलं बाणैस्तदपिसाच्छि

अ.
३
६३

नत् ॥१३॥ ततःसिंहस्समुत्पत्यगजकुं
भांतरेस्थितः ॥ बाहुयुद्धेनयुयुधेतेनोच्चै
स्त्रिदशारिणा ॥१४॥ युध्यमानौततस्तौ
तुतस्मात्रागान्महींगतौ ॥ युयुधातेति
संरब्धौप्रहारैरतिदारुणैः ॥ १५ ॥ ततोवे
गात्खमुत्पत्यानिपत्यचमृगारिणा ॥ कर

प्रहारेणशिरश्चामरस्यपृथक्कृतं ॥ १६ ॥
उदग्रश्चरणे देव्याशिलावृक्षादिभिर्हतः ॥
दंतमुष्टितलैश्चैव करालश्च निपातितः॥
॥ १७ ॥ देवीक्रुद्धागदापातैश्चूर्णयामास
चोद्धतं ॥ बाष्कलंभिंदिपालेनबाणैस्ता
म्रंतथांधकम् ॥ १८ ॥ उग्रास्यमुग्रवीर्यं

चतथैवचमहाहनुं ॥ त्रिनेत्राचत्रिशूलेन
जघानपरमेश्वरी ॥ १९ ॥ बिडालस्या
सिनाकायात्पातयामासवैशिरः॥दुर्धरंदु
र्मुखंचोभौशरैर्निन्येयमक्षयं ॥ २० ॥ ए
वंसंक्षीयमाणेतु स्वसैन्येमहिषासुरः ॥
माहिषेणस्वरूपेण त्रासयामासतान्ग

णान् ॥२१॥ कांश्चित्तुंडप्रहारेणखुरक्षेपै
स्तथापरान् ॥ लांगूलताडितांश्चान्यान्
शृगाभ्यांचविदारितान् ॥ २२ ॥ वेगेन
कांश्चिदपरान्नादेनभ्रमणेनच ॥ निःश्वा
सपवनेनान्यान्पातयामासभूतले ॥२३
निपात्यप्रमथानीकमभ्यधावतसोसुरः

॥सिंहंहंतुंमहादेव्याः कोपंचक्रेततोम्बि
का ॥ २४ ॥ सोपिकोपान्महावीर्यःखुर
क्षुण्णमहीतलः ॥ शृंगाभ्यांपर्वतानुच्चां
श्चिक्षेपचननादच ॥२५॥ वेगभ्रमणवि
क्षुण्णामहीतस्यव्यशीर्यत ॥लांगूलेनाह
तश्चाब्धिःप्लावयामाससर्वतः ॥ २६ ॥

धुतशृंगविभिन्नाश्चखंडंखंडंययुर्घनाः॥
श्वासानिलास्ताःशतशो निपेतुर्नभसो
चलाः॥२७॥ इतिक्रोधसमाध्मातमाप
तंतंमहासुरम् ॥ दृष्ट्वासाचंडिकाकोपंतद्व
धायतदाकरोत्॥२८॥ साक्षिप्त्वातस्यवै
पाशंतंबबंधमहासुरः ॥ तत्याजमाहिषं

रूपंसोपिबद्धोमहामृधे ॥ २९ ॥ ततःसिं
होभवत्सद्योयावत्तस्यांबिकाशिरः॥ छि
नत्तितावत्पुरुषःखड्गपाणिरदृश्यत॥३०॥
ततएवाशुपुरुषं देवीचिच्छेदसायकैः ॥
तंखड्गचर्मणासार्धंततः सोभून्महागजः
॥ ३१ ॥ करेणचमहासिंहंतंचकर्षजग

र्जंच ॥ कर्षतस्तु करं देवी खड्गेन निरकृंतत
॥ ३२ ॥ ततो महासुरो भूयो माहिषं वपुरा
स्थितः ॥ तथैव क्षोभयामास त्रैलोक्यं स
चराचरं ॥ ३३ ॥ ततः क्रुद्धा जगन्माता
चण्डिका पानमुत्तमम् ॥ पपौ पुनः पुनश्चै
वजहासारुणलोचना ॥ ३४ ॥ ननर्द चा

सुरः सोपिबलवीर्यमदोद्धतः॥ विषाणा
भ्यांच चिक्षेप चंडिकांप्रति भूधरान् ॥
॥ ३५ ॥ साचतान्प्रहितांस्तेनचूर्णयंती
शरोत्करैः ॥ उवाचतंमदोद्धूतमुखरागा
कुलाक्षरं ॥ ३६॥ देव्युवाच ॥ ३७ ॥ ग
र्जगर्जक्षणंमूढमधुयावत्पिबाम्यहं ॥ म

यात्वयिहतेऽत्रैव गर्जिष्यंत्याशुदेवताः॥
॥३८॥ ऋषिरुवाच ॥३९॥ एवमुक्त्वा
समुत्पत्यसारूढातंमहासुरं ॥ पादेनाक्र
म्यकंठेचशूलेनैनमताडयत् ॥ ४० ॥ त
तः सोपिपदाक्रांतस्तयानिजमुखात्ततः
अर्धनिष्क्रांतएवासीद्देव्या वीर्यैणसंवृ

तः॥४१॥अर्धनिष्क्रांतएवासौयुद्ध्यमा
नोमहासुरः ॥ तयामहासिनादेव्याशिर
श्छित्त्वानिपातितः ॥ ४२॥ ततोहाहाकृ
तंसर्वंदैत्यसैन्यंननाशतत् ॥ प्रहर्षंचपरं
जग्मुःसकलादेवतागणाः ॥४३॥ तुष्टुवु
स्तांसुरादेवींसहदिव्यैर्महर्षिभिः ॥ जगु

गंधर्वपतयोननृतुश्चाप्सरोगणाः॥४४॥
॥ इतिमार्कंण्डेयपुराणेसावर्णिकेमन्वंत
रेदेवीमाहात्म्येमहिषासुरवधोनामतृती
योध्यायः॥३॥उवाच ॥३॥ श्लोकाः ॥
॥ ४१ ॥ एवं ॥ ४४ ॥ एवमादितः ॥
॥२१७॥ ॥ ऋषिरुवाच ॥ १ ॥ शक्रा

दयःसुरगणानिहतेतिवीर्यैतस्मिन्दुरात्म
निसुरारिबलेचदेव्या ॥ तांतुष्टुवुःप्रणति
नम्रशिरोधरांसावाग्भिःप्रहर्षपुलकोद्गम
चारुदेहाः ॥ २ ॥ देव्यायययाततमिदंजग
दात्मशक्त्या निश्शेषदेवगणशक्तिसमूह
मूर्त्या ॥ तामंबिकामखिलदेवमहर्षिपू

ज्यां भक्त्यानताःस्म विदधातु शुभानि
सानः ॥ ३ ॥ यस्याःप्रभावमतुलंभगवा
ननंतो ब्रह्माहरश्चनहिवक्तुमलंबलंच ॥
साचण्डिकाखिलजगत्परिपालनायना
शायचाशुभभयस्यमतिंकरोतु ॥ ४ ॥
याश्रीःस्वयंसुकृतिनां भवनेष्वलक्ष्मीः

पापात्मनांकृतधियांहृदयेषुबुद्धिः ॥ श्र
द्धासतांकुलजनप्रभवस्यलज्जा तांत्वां
नतास्स्मपरिपालय देविविश्वम् ॥ ५ ॥
किंवर्णयामतवरूपमचिंत्यमेतत्किंचा
तिवीर्यमसुरक्षयकारि भूरि ॥ किंचाह
वेषुचरितानितवातियानिसर्वेषुदेव्यसुर

स. ७१

देवगणादिकेषु ॥ ६॥ हेतुःसमस्तजगतां त्रिगुणापि दोषैर्नज्ञायसे हरिहरादिभिर प्यपारा ॥ सर्वाश्रयाखिलमिदंजगदंश भूतमव्याकृताहिपरमाप्रकृतिस्त्वमाद्या ॥ ७॥ यस्यास्समस्तसुरतासमुदीरणेन तृप्तिंप्रयातिसकलेषुमखेषुदेवि ॥ स्वाहा

अ. ४ ७१

सिवै पितृगणस्यच तृप्तिहेतुरुच्चार्यसेत्व
मतएवजनैस्स्वधाच ॥८॥ यामुक्तिहेतु
रविचिंत्यमहाव्रतात्वमभ्यस्यसेसुनिय
तेंद्रियतत्त्वसारैः ॥ मोक्षार्थिभिर्मुनिभि
रस्तसमस्तदोषैर्विद्यासिसाभगवती पर
माहिदेवि ॥ ९ ॥ शब्दात्मिकासुविमल

स.
७२

र्यजुषांनिधानमुद्गीथरम्यपदपाठवतां
चसाम्नाम् ॥ देवित्रयीभगवतीभवभाव
नायवार्ताचसर्वजगताम्परमार्तिहंत्री ॥
॥१०॥ मेधासिदेविविदिताखिलशास्त्र
सारा दुर्गासिदुर्गभवसागरनौरसंगा ॥
श्रीःकैटभारिहृदयैककृताधिवासागौरी

अ.
४
७२

त्वमेवशशिमौलिकृतप्रतिष्ठा ॥ ११ ॥ई
षत्सहाससममलंपरिपूर्णचंद्रबिम्बानुका
रिकनकोत्तमकांतिकांतं ॥ अत्यद्भुतंप्र
हृतमात्तरुषातथापि वक्त्रं विलोक्यसह
सामहिषासुरेण ॥१२॥ दृष्ट्वातुदेविकुपि
तं भ्रुकुटीकरालमुद्यच्छशांकसदृशाच्छ

वियन्नसद्यः ॥ प्राणान्मुमोचमहिषस्तद
तीवचित्रंकैर्जीव्यतेहिकुपितांतकदर्शने
न ॥१३॥ देविप्रसीदपरमाभवतीभवाय
सद्यो विनाशयसि कोपवती कुलानि॥
विज्ञातमेतदधुनैवयदस्तमेतन्नीतंबलंसु
विपुलंमहिषासुरस्य ॥१४॥ तेसंमताज

नपदेषुधनानितेषांतेषां यशांसिनचसी
दतिधर्मवर्गः ॥ धन्यास्तएवनिभृतात्म
जभृत्यदारा येषांसदाभ्युदयदाभवतीप्र
सन्ना॥१५॥धर्म्याणिदेविसकलानिसदै
वकर्माण्यत्याहृतः प्रतिदिनंसुकृतीकरो
ति ॥ स्वर्गंप्रयातिच ततोभवतीप्रसादा

लोकत्त्रयेपिफलदाननुदेवितेन ॥ १६ ॥
दुर्गेस्मृताहरासिभीतिमशेषजंतोःस्वस्थैः
स्मृतामतिमतीवशुभांददासि ॥ दारिद्र्य
दुःखभयहारिणिकात्वदन्यासर्वोपकार
करणायसदार्द्रचित्ता ॥ १७ ॥ एभिर्हते
र्जगदुपैतिसुखंतथैतेकुर्वंतु नामनरकाय

चिरायपापं ॥ संग्राममृत्युमधिगम्यदि
वंप्रयांतु मत्वेतिनूनमहितान्विनिहांसिदे
वि ॥ १८ ॥ दृष्ट्वैवकिंनभवतीप्रकरोति
भस्मसर्वासुरानरिषुयत्प्रहिणोषिशस्त्रं ॥
लोकान्प्रयांतुरिपवोपिहिशस्त्रपूता इत्थं
मतिर्भवतितेष्वहितेषुसाध्वी ॥ १९ ॥

खड्गप्रभानिकरविस्फुरणैस्तथोग्रैश्शूला
ग्रकांतिनिवहेनदृशोसुराणां ॥ यन्नागता
विलयमंशुमादिंदुखंडयोग्याननं तव वि
लोकयतांतदेतत् ॥ २० ॥ दुर्वृत्तवृत्तशम
नंतवदेविशीलं रूपंतथैतदविचिंत्यमतु
ल्यमन्यैः ॥ वीर्यंचहंतृत्हतदेवपराक्रमा

णांवैरिष्वपिप्रकटितैवदयात्वयेत्थम् ॥
॥२१॥ केनोपमाभवतुतेस्यपराक्रमस्य
रूपंचशत्रुभयकार्यतिहारिकुत्र ॥ चित्ते
कृपासमरनिष्ठुरताचदृष्टा त्वय्येवदेविव
रदेभुवनत्रयेपि ॥ २२ ॥ त्रैलोक्यमेतद
खिलं रिपुनाशनेन त्रातंत्वया समरमूर्ध

नितेपिहत्वा ॥ नीत्तादिवंरिपुगणाभयम
प्यपास्तमस्माकमुन्मदसुरारिभवं नम
स्ते ॥ २३ ॥ शूलेनपाहिनोदेविपाहिखड्गे
नचाम्बिके ॥ घंटास्वनेननःपाहिचाप
ज्यानिस्स्वनेनच ॥ २४॥ प्राच्यांरक्षप्र
तीच्यांचचण्डिकेरक्षदक्षिणे ॥ भ्रामणे

नात्मशूलस्यउत्तरस्यांतथेश्वरि ॥२५॥
सौम्यानियानिरूपाणि त्रैलोक्येविचरंतिते ॥ यानिचात्यर्थघोराणितैरक्षास्मांस्तथाभुवम् ॥ २६॥ खड्गशूलगदादीनि यानिचास्त्राणितेंबिके ॥ करपल्लवसंगीनितैरस्मान्रक्षसर्वतः ॥२७॥ ऋषिरुवा

च ॥२८॥ एवंस्तुतासुरैर्दिव्यैःकुसुमैर्नंद
नोद्भवैः॥ अर्चिताजगतांधात्रीतत्रगंधा
नुलेपनैः ॥२९॥ भक्त्यासमस्तैस्त्रिदशै
र्दिव्यैर्धूपैस्सुधूपिता॥प्राहप्रसादसुमुखी
समस्तान्प्रणतान्सुरान् ॥ ३०॥ देव्युवा
च ॥ ३१ ॥ व्रियतांत्रिदशास्सर्वैर्यदस्म

त्तोभिवांछितं ॥३२॥ देवाऊचुः॥३३ ॥
भगवत्याकृतंसर्वंनकिंचिदवशिष्यते ॥
यदयं निहतश्शत्रुरस्माकं महिषासुरः ॥
॥ ३४॥ यदिचापिवरोदेयस्त्वयास्माकं
महेश्वरि॥संस्मृतासंस्मृतात्वंनोहिंसेथाः
परमापदः ॥ ३५ ॥ यश्चमर्त्यःस्तवैरभि

स.

७८

स्त्वांस्तोष्यत्यमलानने ॥ तस्यवित्तर्धि
विभवैर्धनदारादिसंपदां ॥ ४६ ॥ वृद्धये
स्मत्प्रसन्नात्वंभवेथाःसर्वदांबिके॥३७॥
॥ऋषिरुवाच ॥ ३८॥ इतिप्रसादितादेवै
र्जगतोर्थेतथात्मनः॥तथेत्युक्त्वाभद्रका
लीबभूवांतर्हितानृप ॥ ३९ ॥ इत्येतत्क

अ.

४

७८

थितंभूपसंभूतासायथापुरा ॥ देवीदेवश
रीरेभ्योजगत्त्रयहितैषिणी ॥४० ॥ पुन
श्चगौरीदेहात्सासमुद्भूतायथाभवत् ॥ व
धायदुष्टदैत्यानां तथाशुंभनिशुंभयोः ॥
॥४१ ॥ रक्षणायचलोकानांदेवानामुप
कारिणी ॥ तच्छृणुष्वमयाख्यातंयथा

वत्कथयामिते ॥४२॥ ॥इतिमार्कण्डेयपुराणेसावर्णिकेमन्वंतरे देवीमाहात्म्येशक्रादिस्तुतिर्नाम चतुर्थोध्यायः॥॥ ४॥ उवाच ॥५॥ अर्धं ॥२॥ श्लोकाः ॥३५॥एवं ॥४२॥ एवमादितः॥२५१॥

॥उत्तमचरितस्य॥ रुद्रऋषिः ॥ महासर

स्वतीदेवता ॥ अनुष्टुप्छंदः ॥ भीमाश
क्तिः॥भ्रामरीबीजं ॥सूर्यस्तत्त्वं ॥सामवे
दःस्वरूपं ॥ महासरस्वतीप्रीत्यर्थंउत्तम
चरितजपेविनियोगः ॥ ध्यानं ॥ घंटाशू
लहलानिशंखमुसलेचक्रंधनुःसायकंह
स्ताब्जैर्दधतींघनान्तविलसच्छीतांशुतु

ल्यप्रभां ॥ गौरीदेहसमुद्भवां त्रिनयनामा
धारभूतां महा पूर्वामत्र सरस्वतीमनुभजे
च्छुंभादिदैत्यार्दिनीं ॥ ऋषिरुवाच ॥ १ ॥
पुरा शुंभनिशुंभाभ्यामसुराभ्यां शचीप
तेः ॥ त्रैलोक्यं यज्ञभागाश्च हृता मदबला
श्रयात् ॥ २ ॥ तावेव सूर्यतां तद्वदधिकारं

तथैवं ॥ कौबेरमथयाम्यंचचक्रातेवरु
णस्यच ॥ ३ ॥ तावेवपवनर्द्धिंचचक्रतु
र्वह्निकर्मच ॥ ततोदेवाविनिर्धूताभ्रष्टरा
ज्याःपराजिताः ॥ ४ ॥ हृताधिकारास्त्रि
दशास्ताभ्यांसर्वेनिराकृताः ॥ महासुरा
भ्यांतांदेवींसंस्मरंत्यपराजिताम् ॥ ५ ॥

तयास्माकंवरोदत्तो यथापत्सुस्मृताखि
लाः ॥भवतांनाशयिष्यामितत्क्षणात्पर
मापदः ॥ ६ ॥ इतिकृत्वामतिंदेवाहिमवं
तंनगेश्वरं॥जग्मुस्तत्रततोदेवींविष्णुमा
यांप्रतुष्टुवुः ॥७ ॥ देवाऊचुः ॥८॥ नमो
देव्यैमहादेव्यैशिवायैसततंनमः॥नमः प्र

कृत्यै भद्रायै नियताः प्रणताः स्मतां ॥ ९॥
रौद्रायै नमो नित्यायै गौर्यै धात्र्यै नमो न
मः ॥ ज्योत्स्नायै चेंदुरूपिण्यै सुखायै सत
तं नमः ॥१०॥ कल्याण्यै प्रणतां वृद्ध्यै
सिद्ध्यै कुर्मों नमो नमः ॥ नैर्ऋत्यै भूभृतां
लक्ष्म्यै शर्वाण्यै ते नमो नमः ॥ ११॥ दुर्गा

यैदुर्गपारायैसारायैसर्वकारिण्यै ॥ ख्या
त्यै तथैवकृष्णायै धूम्रायै सततं नमः ॥
॥ १२ ॥ अतिसौम्यातिरौद्रायैनतास्त
स्यैनमोनमः ॥ नमोजगत्प्रतिष्ठायैदेव्यै
कृत्यैनमोनमः ॥ १३ ॥ यादेवीसर्वभूते
षुविष्णुमायेतिशब्दिता ॥ नमस्तस्यै ॥

॥ १४ ॥ नमस्तस्यै ॥ १५ ॥ नमस्तस्यै
नमोनमः ॥ १६ ॥ यादेवीसर्वभूतेषुचेत
नेत्यभिधीयते ॥ नमस्तस्यै ॥ १७ ॥ न
मस्तस्यै ॥ १८ ॥ नमस्तस्यैनमोनमः ॥
॥ १९ ॥ यादेवीसर्वभूतेषुबुद्धिरूपेणसं
स्थिता ॥ नमस्तस्यै ॥ २० ॥ नमस्तस्यै

॥ २१ ॥ नमस्तस्यैनमोनमः ॥२२॥ यादेवीसर्वभूतेषुनिद्रारूपेणसंस्थिता ॥ नमस्तस्यै ॥२३ ॥ नमस्तस्यै ॥ २४ ॥ नमस्तस्यैनमोनमः ॥ २५ ॥ यादेवीसर्वभूतेषुक्षुधारूपेणसंस्थिता ॥ नमस्तस्यै ॥ २६ ॥ नमस्तस्यै ॥२७॥ नमस्त

स्यैनमोनमः ॥ २८ ॥ यादेवीसर्वभूतेषु
च्छायारूपेणसंस्थिता ॥ नमस्तस्यै ॥
॥ २९ ॥ नमस्तस्यै ॥३०॥ नमस्तस्यैन
मोनमः॥३१॥ यादेवीसर्वभूतेषुशक्तिरू
पेणसंस्थिता ॥ नमस्तस्यै ॥ ३२ ॥ नम
स्तस्यै ॥ ३३ ॥ नमस्तस्यैनमोनमः

॥३४॥ यादेवीसर्वभूतेषुतृष्णारूपेणसं
स्थिता॥नमस्तस्यै ॥ ३५ ॥ नमस्तस्यै
॥३६॥नमस्तस्यैनमोनमः ॥ ३७ ॥
यादेवीसर्वभूतेषुक्षांतिरूपेणसंस्थिता ॥
नमस्तस्यै ॥ ३८ ॥ नमस्तस्यै ॥ ३९ ॥
नमस्तस्यैनमोनमः ॥ ४० ॥ यादेवीस

र्वभूतेषुजातिरूपेणसंस्थिता ॥ नमस्त
स्यै ॥ ४१ ॥ नमस्तस्यै ॥४२॥ नमस्त
स्यैनमोनमः ॥ ४३ ॥ यादेवीसर्वभूतेषु
लज्जारूपेणसंस्थिता॥नमस्तस्यै ॥४४॥
नमस्तस्यै ॥ ४५ ॥ नमस्तस्यैनमोनमः
॥ ४६ ॥ यादेवीसर्वभूतेषुशांतिरूपेणसं

स्थिता॥नमस्तस्यै ॥ ४७ ॥ नमस्तस्यै
॥ ४८ ॥ नमस्तस्यैनमोनमः ॥ ४९ ॥
यादेवीसर्वभूतेषुश्रद्धारूपेणसंस्थिता ॥
नमस्तस्यै ॥ ५० ॥ नमस्तस्यै ॥ ५१ ॥
नमस्तस्यैनमोनमः ॥ ५२ ॥ यादेवीस
र्वभूतेषुकांतिरूपेणसंस्थिता ॥ नमस्त

स्यै ॥ ५२ ॥ नमस्तस्यै ॥ ५४॥ नमस्त
स्यैनमोनमः ॥५५॥ यादेवीसर्वभूतेषु
लक्ष्मीरूपेणसंस्थिता ॥ नमस्तस्यै ॥
॥ ५६ ॥ नमस्तस्यै ॥ ५७॥ नमस्तस्यै
नमोनमः ॥५८॥ यादेवीसर्वभूतेषुवृत्ति
रूपेणसंस्थिता ॥ नमस्तस्यै ॥५९॥ न

मस्तस्यै ॥६०॥ नमस्तस्यैनमोनमः ॥
॥ ६१॥ यादेवीसर्वभूतेषुस्मृतिरूपेणसं
स्थिता ॥ नमस्तस्यै ॥ ६२॥ नमस्तस्यै
॥ ६३॥ नमस्तस्यैनमोनमः ॥६४॥ या
देवीसर्वभूतेषुदयारूपेणसंस्थिता ॥ नम
स्तस्यै ॥६५॥ नमस्तस्यै ॥ ६६॥ नम

स्तस्यैनमोनमः ॥६७॥ यादेवीसर्वभूते
षुतुष्टिरूपेणसंस्थिता॥नमस्तस्यै॥६८॥
नमस्तस्यै ॥ ६९ ॥ नमस्तस्यैनमोनमः
॥ ७० ॥ यादेवीसर्वभूतेषुमातृरूपेणसं
स्थिता ॥ नमस्तस्यै ॥७१॥ नमस्तस्यै
॥ ७२ ॥ नमस्तस्यैनमोनमः ॥ ७३ ॥

यादेवीसर्वभूतेषुभ्रांतिरूपेणसंस्थिता ॥
नमस्तस्यै ॥७४॥ नमस्तस्यै ॥७५॥ न
मस्तस्यैनमोनमः ॥ ७६ ॥ इंद्रियाणाम
धिष्ठात्रीभूतानांचाखिलेषुया ॥ भूतेषु
सततंतस्यैव्याप्त्यैदेव्यैनमोनमः ॥ ७७॥
चितिरूपेणयाकृत्स्नमेतद्व्याप्यस्थिता

जगत् ॥ नमस्तस्यै ॥ ७८॥ नमस्तस्यै
॥७९ ॥ नमस्तस्यैनमोनमः ॥८०॥ स्तु
तासुरैःपूर्वम भीष्टसंश्रयात्तथासुरेंद्रेणदि
नेषुसेविता ॥ करोतुसानः शुभहेतुरीश्व
रीशुभानिभद्राण्यभिहंतुचापदः ॥८१॥
यासांप्रतंचोद्धतदैत्यतापितैरस्माभिरी

स.
८८

शाचसुरैर्नमस्यते॥याचस्मृतातत्क्षणमे
वहंतिनःसर्वापदोभक्तिविनम्रमूर्तिभिः
॥ ८२ ॥ऋषिरुवाच ॥ ८३ ॥ एवंस्तवा
दियुक्तानांदेवानांतत्रपार्वती ॥ स्नातुम
भ्यायय़ौतोयेजान्हव्यानृपनंदन ॥८४
साब्रवीत्तान्सुरान्सुभ्रूर्भवद्भिस्स्तूयतेत्र

अ.
५
८८

का ॥ शरीरकोशतश्चास्यासमुद्भूताब्र
वीच्छिवा ॥ ८५॥ स्तोत्रंममैतत्क्रियते
शुंभदैत्यनिराकृतैः ॥देवैःसमेतैःसमरेनि
शुंभेनपराजितैः ॥ ८६ ॥ शरीरकोशाद्य
त्तस्याःपार्वत्यानिःसृतांबिका ॥ कौशि
कीतिसमस्तेषुततोलोकेषुगीयते ॥८७

तस्यांविनिर्गतायांतुकृष्णाभूत्सापिपा
र्वती ॥ कालिकेतिसमाख्याताहिमाच
लकृताश्रया ॥ ८८ ॥ ततोंबिकांपरंरूपं
बिभ्राणांसुमनोहरं ॥ ददर्शचण्डोमुण्डश्च
भृत्यौशुंभनिशुंभयोः ॥ ८९ ॥ ताभ्यांशुं
भायचाख्याताअतीवसुमनोहरा ॥ का

प्यास्तेस्त्रीमहाराजभासयंतीहिमाचलं
॥ १० ॥ नैवताहृक्क्वचिद्रूपंदृष्टंकेनचि
दुत्तमम् ॥ ज्ञायतांकाप्यसौदेवीगृह्यतां
चासुरेश्वर ॥११॥ स्त्रीरत्नमतिचार्वंगी
द्योतयंतीदिशास्त्विषा ॥ सातुतिष्ठतिदै
त्येंद्रतांभवान्द्रष्टुमर्हति ॥ १२ ॥ यानिर

स.
१०

तानिमणयोगजाश्वादीनिवैप्रभो ॥ त्रै
लोक्येतुसमस्तानिसांप्रतंभांतितेगृहे ॥
॥ १३ ॥ ऐरावतःसमानीतोगजरत्नंपुरंद
रात् ॥ पारिजाततरुश्चायंतथैवोच्चैःश्रवा
हयः ॥ १४ ॥ विमानंहंससंयुक्तमेतत्ति
ष्ठतितेंऽगणे ॥ रत्नभूतमिहानीतंयदासीद्वे

अ.
५
१०

धसोद्धृतं ॥ १५ ॥ निधिरेषमहापद्मःसमा
नीतोधनेश्वरात् ॥ किंजल्किनींददौचा
ब्धिर्मालामम्लानपंकजां ॥ १६ ॥ छत्रंते
वारुणंगेहेकांचनस्राविविष्ठति ॥ तथायं
स्यंदनवरोयःपुरासीत्प्रजापतेः ॥ १७ ॥ मृ
त्योरुत्क्रांतिदानामशक्तिरीशत्वयाहृता

स. ११

॥पाशःसलिलराजस्य भ्रातुस्तवपरिग्रहे ॥९८॥ निशुंभस्याब्धिजाताश्चसमस्ता रत्नजातयः॥वन्हिरपिददौतुभ्यमग्निशौचेचवाससी ॥९९॥एवंदैत्येंद्ररत्नानिसमस्तान्याहृतानिते ॥स्त्रीरत्नमेषाकल्याणीत्वयाकस्मान्नगृह्यते ॥१००॥ ऋषि

अ. ५

११

रुवाच ॥१॥ निशम्येतिवचःशुंभःसत
दाचंडमुंडयोः ॥ प्रेषयामाससुग्रीवंदूतंदे
व्यामहासुरम् ॥२॥ इतिचेतिचवक्तव्या
सागत्वावचनान्मम ॥यथाचाभ्येतिसं
प्रीत्यातथाकार्यंत्वयालघु ॥ ३॥ सतत्र
गत्वायत्रास्तेशैलोद्देशेतिशोभने ॥ सादे

स.
१२

वीतांततःप्राहश्लक्ष्णंमधुरयागिरा ॥४॥
दूतउवाच ॥५॥ देविदैत्येश्वरःशुंभस्त्रैलो
क्येपरमेश्वरः ॥ दूतोहंप्रेषितस्तेनत्वत्स
काशमिहागतः ॥६॥ अव्याहताज्ञःसर्वा
सुयःसदादेवयोनिषु ॥ निर्जिताखिलदै
त्यारिस्सयदाहशृणुष्वतत् ॥७॥ ममत्रै

अ.
५

१२

लोक्यमखिलंममदेवावशानुगाः ॥ यज्ञ
भागानहंसर्वांनुपाश्नामिपृथक्पृथक् ॥
॥ ८ ॥त्रैलोक्येनवरत्नानिममवश्यान्य
शेषतः॥ तथैवगजरत्नंचहृतंदेवेंद्रवाहनं
॥ ९ ॥क्षीरोदमथनोद्भूतमश्ववरत्नंममाम
रैः ॥ उच्चैःश्रवससंज्ञंतत्प्राणिपत्यसमर्पि

